## CANTO IV

मुनौ ब्रुवाणेऽपि तु तत्र धर्मं धर्मं प्रति ज्ञातिषु चादृतेषु।
प्रासादसंस्थो मदनैककार्यः प्रियासहायो विजहार नन्दः ॥१॥
स चक्रवाक्येव हि चक्रवाकस्तया समेतः प्रियया प्रियार्हः।
नाचिन्तयद्वैश्रमणं न शक्रं तत्स्थानहेतोः कुत एव धर्मं ॥२॥
लक्ष्म्या च रूपेण च सुन्दरीति स्तम्भेन गर्वेण च मानिनीति।
दीप्त्या च मानेन च भामिनीति यातो बभाषे त्रिविधेन नाम्ना ॥३॥
सा हासहंसा नयनद्विरेफा पीनस्तनात्युन्नतपद्मकोशा।
भूयो बभासे स्वकुलोदितेन स्त्रीपद्मिनी नन्ददिवाकरेण ॥४॥
रूपेण चात्यन्तमनोहरेण रूपानुरूपेण च चेष्टितेन।
मनुष्यलोके हि तदा बभूव सा सुन्दरी स्त्रीषु नरेषु नन्दः ॥५॥
सा देवता नन्दनचारिणीव कुलस्य नन्दीजननश्च नन्दः।
अतीत्य मर्त्याननुपेत्य देवान् सृष्टावभूतामिव भूतधात्रा ॥६॥
तां सुन्दरीं चेन्न लभेत नन्दः सा वा निषेवेत न तं नतभ्रूः।
द्वन्द्वं ध्रुवं तद्विकलं न शोभेतान्योन्यहीनाविव रात्रिचन्द्रौ ॥७॥

L has 1 a 1-a 3 p, a 4 a 9, a 10 b 2 f, 2 b 5 b 7 f, b 8-d 7, d 8 d 11 f, 3 b 7-b 9 f, 4 c 9 5 a 3, a 4-b 1 p, (fol 6 b) 7 a 7-a 11, b 1-c 11 p.

1 a, मनो P. 2 d, °हतोःक्षतएवधर्म्म P, क्षत एव धर्मः C 3 a, रूपेन P. b, भामिमीति G c, भामेन Gn मानिनीति G d, यानो P, यासौ C. 4 b, °त्युन्नपद्मकोसा P, °भ्युन्नत° C d, °पद्मिमी P 5 d स्त्रीषु P

कन्दर्परत्योरिव लक्ष्यभूतं प्रमोदनान्द्योरिव नीडभूतं ।
प्रहर्षतुष्ट्योरिव पात्रभूतं द्वन्द्वं सहारंस्त मदान्धभूतं ॥८॥
परस्परोद्वीक्षणतत्पराक्षं परस्परव्याहृतसक्तचित्तं ।
परस्पराश्लेषहृताङ्गरागं परस्परं तन्मिथुनं जहार ॥९॥
भावानुरक्तौ गिरिनिर्झरस्थौ तौ किंनरीकिंपुरुषाविवोभौ ।
चिक्रीडतुश्चाभिविरेजतुश्च रूपश्रियान्योन्यमिवाक्षिपन्तौ ॥१०॥
अन्योन्यसंरागविवर्धनेन तद्द्वन्द्वमन्योन्यमरीरमच्च ।
क्लमान्तरेऽन्योन्यविनोदनेन सलीलमन्योन्यममीमदच्च ॥११॥
विभूषयामास ततः प्रियां स सिषेविषुस्तां न मृजावहार्थं ।
स्वेनैव रूपेण विभूषिता हि विभूषणानामपि भूषणं सा ॥१२॥
दत्त्वाथ सा दर्पणमस्य हस्ते ममाग्रतो धारय तावदेनं ।
विशेषकं यावदहं करोमीत्युवाच कान्तं स च तं बभार ॥१३॥
भर्तुस्ततः श्मश्रु निरीक्षमाणा विशेषकं सापि चकार तादृक् ।
निश्वासवातेन च दर्पणस्य चिकित्सयित्वा निजघान नन्दः ॥१४॥
सा तेन चेष्टाललितेन भर्तुः शाठ्येन चान्तर्मनसा जहास ।
भवेच्च रुष्टा किल नाम तस्मै ललाटजिह्मां भृकुटिं चकार ॥१५॥

L has 9c9 10b2 b3 b4f 12b3 13a10 a11 b1p b6 b7p b8 b11 c1p 14d6 15d11

8a लक्ष्म° P d महारस्त P 9b परस्परव्या° P H c d, तन्मिथुन LP जहार P 10c विक्रीड° P °श्चापि विरेज° C 11c, क्ल(or हु ?)मान्तरेनर्थवले हरे(ति)न P, क्लमान्तरे तर्षवलेन तेन C d सरीलम° P 12a प5(?)या P, C c b सिषेविषु° P c रूपेन P 13c करोमि° P 14a ततश्मश्रुश्मानराष्यमाणा P, निरूप्यमाणा C निरूपयन्ती H निरूपयाणा S b °कमासापिपि (or पि) P, G c d चिकित्सयित्वा P किंचिच्कुचित्व Gu 15b साध्येमचातुर्मणसा P c भुत्वा च G d °जिह्मा P

चिक्षेप कर्णोत्पलमस्य चांसे करेण सव्येन मदालसेन ।
पत्त्राङ्गुलिं चार्धनिमीलिताक्षे वक्त्रेऽस्य तामेव विनिर्दुधाव ॥१६॥
ततश्चलन्नूपुरयोक्त्रिताभ्यां नखप्रभोद्भासितराङ्गुलिभ्यां ।
पद्भ्यां प्रियाया नलिनोपमाभ्यां मूर्ध्ना भयान्नाम ननाम नन्दः ॥१७॥
स मुक्तपुष्पोन्मिषितेन मूर्ध्ना ततः प्रियायाः प्रियकृद्बभासे ।
सुवर्णवेद्यामनिलावभग्नः पुष्पातिभारादिव नागवृक्षः ॥१८॥
सा तं स्तनोद्वर्तितहारयष्टिरुत्थापयामास निपीड्य दोर्भ्यां ।
कथं कृतोऽसीति जहास चोच्चैर्मुखेन साचीकृतकुण्डलेन ॥१९॥
पत्युस्ततो दर्पणसक्तपाणेर्मुहुर्मुहुर्वक्त्रमवेक्षमाणा ।
तमालपत्त्रार्द्रतले कपोले समापयामास विशेषकं तत् ॥२०॥
तस्या मुखं तत्सतमालपत्त्रं ताम्राधरौष्ठं चिकुरायताक्षं ।
रक्ताधिकाग्रं पतितद्विरेफं सशैवलं पद्ममिवाबभासे ॥२१॥
नन्दस्ततो दर्पणमादरेण बिभ्रत्तदामण्डनसाक्षिभूतं ।
विशेषकावेक्षणकेकराक्षो लडत्प्रियाया वदनं ददर्श ॥२२॥
तत्कुण्डलादष्टविशेषकान्तं कारण्डवक्लिष्टमिवारविन्दं ।
नन्दः प्रियाया मुखमीक्षमाणो भूयः प्रियानन्दकरो बभूव ॥२३॥
विमानकल्पे स विमानगर्भे ततस्तथा चैव ननन्द नन्दः ।
तथागतश्चागतभैक्षकालो भैक्षाय तस्य प्रविवेश वेश्म ॥२४॥

L has 16 a 1-a 10, a 11 p, b 1 b 3 f, b 9 c 2 f, c 3-d 2 p, d 3 d 8 f, 17 a 5-b 5 f, b 6-22 a 4, (fol. 7 a) 22 a 5 24 d 11

16 a, चासे P. c, पत्त्राञ्जलिं Gu. चाङ्ग॰ (or द्व॰) P 17 a, ॰योक्तिताभ्यां P. b, ॰प्रभोद्भसितराङ्गुलि॰ P, ॰वराङ्गुलि॰ G 18 c, ॰मणिलाव॰ P 19 a, ॰यस्ति॰ P. b, ॰रुथापया॰ L. cd, चोच्चैर्मुचेन L, चोच्चैमुचेण P. 20 b, ॰र्मुहुर्मुहुर्व॰ P. d, समाधयामास PC, समाप॰(?) L, H c 21 b, ॰रायतचं P. 22 b, ॰भूतः P. c, विसेपकावेचण॰ P 23 a, ॰लादस्त॰ P b, ॰क्लिष्ट॰ P c, ॰माणौ P.

अवाङ्मुखो निष्प्रणयश्च तस्थौ भ्रातुर्गृहेऽन्यस्य गृहे यथैव ।
तस्मादथो प्रेष्यजनप्रमादाद्भिक्षामलब्ध्वैव पुनर्जगाम ॥२५॥
काचित्पिपेषाङ्गविलेपनं हि वासोऽङ्गना काचिदवासयच्च ।
अयोजयत्स्नानविधिं तथान्या जग्रन्थुरन्याः सुरभीः स्रजश्च ॥२६॥
तस्मिन् गृहे भर्तुरतश्चरन्त्यः क्रीडानुरूपं ललितं नियोगं ।
काश्चिन्न बुद्धं ददृशुर्युवत्यो बुद्धस्य वैषा नियतं मनीषा ॥२७॥
काचित्स्थिता तत्र तु हर्म्यपृष्ठे गवाक्षपक्षे प्रणिधाय चक्षुः ।
विनिष्पतन्तं सुगतं ददर्श पयोदगर्भादिव दीप्तमर्कं ॥२८॥
सा गौरवं तत्र विचार्य भर्तुः स्वया च भक्त्यार्हतयार्हतश्च ।
नन्दस्य तस्थौ पुरतो विवक्षुस्तदाज्ञया चेति तदाचचक्षे ॥२९॥
अनुग्रहायास्य जनस्य शङ्के गुरुर्गृहं नो भगवान्प्रविष्टः ।
भिक्षामलब्ध्वा गिरमासनं वा शून्यादरण्यादिव याति भूयः ॥३०॥
श्रुत्वा महर्षेः स गृहप्रवेशं सत्कारहीनं च पुनःप्रयाणं ।
चचाल चित्राभरणाम्बरस्रक्कल्पद्रुमो धूत इवानिलेन ॥३१॥
कृत्वाञ्जलि मूर्धनि पद्मकल्पं ततः स कान्तां गमनं ययाचे ।
कर्तुं गमिष्यामि गुरौ प्रणामं मामभ्यनुज्ञातुमिहार्हसीति ॥३२॥
सा वेपमाना परिसस्वजे तं शालं लता वातसमीरितेव ।
ददर्श चाश्रुप्लुतलोलनेत्रा दीर्घं च निश्वस्य वचोऽभ्युवाच ॥३३॥

I has 25 a 1 28 b 1 b 2-c 2 p c 3 d 3 d 4 d 10 p d 11 30 b 7 b 8 b 10 f b 11 c 4 c 5 c 7 f 31 1 8 c 7 f c 8 c 11 p d 1 32 b 10 b 11-c 11 f d 7 d 10 f.

25 a निष्प्रणयस्य P b भ्रातुगृहे L भ्रान्तगृहे P d ॰मलब्धेव LP C c 26 a पिपेषातु॰ (or न्त॰ ?) L पिपेपान्त॰ P H c d जग्रंन्थु॰ L 27 a तस्मिन्नगृहे P b स्खलित LPC c ददृशू॰ L 28 c विनिस्प॰ P 29 b ॰याहतस्य P 30 a अनुग्रहाया॰ P b ॰न्प्रविस्त P c ॰लब्धा P 31 b ॰प्रयान P c d P om इ॰ 32 a मर्द्धनि P मद्मकल्प L c कर्तुं P 33 b साल P d दीर्घं P

नाहं यियासोर्गुरुदर्शनार्थमर्हामि कर्तुं तव धर्मपीडां ।
गच्छार्यपुत्रेहि च शीघ्रमेव विशेषको यावदयं न शुष्कः ॥३४॥
सचेद्भवेस्त्वं खलु दीर्घसूत्रो दण्डं महान्तं त्वयि पातयेयं ।
मुहुर्मुहुस्त्वां शयितं कुचाभ्यां विबोधयेयं च न चालपेयं ॥३५॥
अथाप्यनाश्यानविशेषकायां मय्येष्यसि त्वं त्वरितं ततस्त्वां ।
निपीडयिष्यामि भुजद्वयेन निर्भूषणेनार्द्रविलेपनेन ॥३६॥
इत्येवमुक्तश्च निपीडितश्च तयासवर्णस्वनया जगाद ।
*एवं करिष्यामि विमुञ्च चण्डि यावद्गुरुर्दूरगतो न मे सः ॥३७॥*
ततः स्तनोद्वर्तितचन्दनाभ्यां मुक्तो भुजाभ्यां न तु मानसेन ।
विहाय वेषं मदनानुरूपं सत्कारयोग्यं स वपुर्बभार ॥३८॥
सा तं प्रयान्तं रमणं प्रदध्यौ प्रध्यानशून्यस्थितनिश्चलाक्षी ।
स्थितोच्चकर्णा व्यपविद्धशष्पा भ्रान्तं मृगं भ्रान्तमुखी मृगीव ॥३९॥
दिदृक्षयाक्षिप्तमना मुनेस्तु नन्दः प्रयाणं प्रति तत्वरे च ।
विवृत्तदृष्टिश्च शनैर्ययौ तां करीव पश्यन् स लडत्करेणुं ॥४०॥
छातोदरीं पीनपयोधरोरुं स सुन्दरीं रुक्मदरीमिवाद्रेः ।
काक्षेण पश्यन्न ततर्प नन्दः पिबन्निवैकेन जलं करेण ॥४१॥

L has 34 a 9 p, a 10–c 8, c 9 d 1 f, d 2 d 5, d 6 f, (fol. 7 b) 36 c 8 d 6, d 7–37 a 5 p, a 6–b 1 f, 39 a 11 b 1 f, b 2–d 6, d 7 d 9 f 40 a 6–a 7 f, b 5 b 9 p, 41 c 9 f, c 10 d 11

34 a °सोगुरु° P b, कर्तु P °पी(पा)डां L c, °पुत्तैहि P 35 b, महान्त P. c, सयितं P. d, चालयेयं PC; J and G c 36 a, °काया P. d, विभूषणेनाद्र° P. 37 b, °सवलेस्वनया P, स वेणु° C जगाम P, G c. c, विमुचचण्डे P d, °द्गुरु-म्दूर° P. 38 a, तत P b, मानसेन P d, तत्कार° P, तत्काल° C d, वपू° P. 39 b, °शून्यस्थिर° G c, स्थिरोच्च° G 40 b, प्रयानं P c, विवृर्त्ति° P. 41 b, सुन्दरीरुक्म° P c, P om one त

तं गौरवं बुद्धगतं चकर्ष भार्यानुरागः पुनराचकर्ष ।
सोऽनिश्चयान्नापि ययौ न तस्थौ तुरंस्तरङ्गेष्विव राजहंसः ॥४२॥
अदर्शनं तूपगतश्च तस्या हर्म्यात्ततश्चावततार तूर्णं ।
श्रुत्वा ततो नूपुरनिस्वनं स पुनर्ललम्बे हृदये गृहीतः ॥४३॥
स कामरागेण निगृह्यमाणो धर्मानुरागेण च कृष्यमाणः ।
जगाम दुःखेन विवर्त्यमानः प्लवः प्रतिस्रोत इवापगायाः ॥४४॥
ततः क्रमैर्दीर्घतमैः प्रचक्रमे कथं नु यातो न गुरुर्भवेदिति ।
स्वजेय तां चैव विशेषकप्रियां कथं प्रियामार्द्रविशेषकामिति ॥४५॥
अथ स पथि ददर्श मुक्तमानं पितृनगरेऽपि तथागताभिमानं ।
दशबलमभितो विलम्बमानं ध्वजमनुयान इवैन्द्रमर्च्यमानं ॥४६॥

सौन्दरनन्दे महाकाव्ये भार्यायाचितको नाम चतुर्थः सर्गः ।

L has 42 a 1–d 1, d 2 d 6 p, d 7 d 11, 43 a 1–a 5 f, c 2 c 9 f, d 9 44 a 7 p, a 8–45 b 12, c 1–c 7 p, c 8 end

42 a, तगौर° P  d, तरंस्त° PC, तु(or सु)रंस्त° L.  43 a, अदर्शनंभूयगतश्च P, °नीभूय H, °नीभूय गते च तस्मिन् G  44 c, निवर्त्यमानः G  45 c, ताचैव P. d, °मार्द्रविशे° P.  46 a, P om. one द  b, तथा गता° C  col, सौन्दरा° P. °याचित्तको P.  चतुर्थ P.

## CANTO V

अथावतीर्याश्वरथद्विपेभ्यः शाक्या यथास्वर्द्धि गृहीतवेषाः ।
महापणेभ्यो व्यवहारिणश्च महामुनौ भक्तिवशात्प्रणेमुः ॥१॥
केचित्प्रणम्यानुययुर्मुहूर्तं केचित्प्रणम्यार्थवशेन जग्मुः ।
केचित्स्वकेष्वावसथेषु तस्थुः कृत्वाञ्जलीन्वीक्षणतत्पराक्षाः ॥२॥
बुद्धस्ततस्तत्र नरेन्द्रमार्गे स्रोतो महद्भक्तिमतो जनस्य ।
जगाम दुःखेन विगाहमानो जलागमे स्रोत इवापगायाः ॥३॥
अथो महद्भिः पथि संपतद्भिः संपूज्यमानाय तथागताय ।
कर्तुं प्रणामं न शशाक नन्दस्तेनाभिरेमे तु गुरोर्महिम्ना ॥४॥
स्वं चावसङ्गं पथि निर्मुमुक्षुर्भक्तिं जनस्यान्यमतेश्च रक्षन् ।
नन्दं च गेहाभिमुखं जिघृक्षन्मार्गं ततोऽन्यं सुगतः प्रपेदे ॥५॥
ततो विविक्तं च विविक्तचेताः सन्मार्गविन्मार्गमभिप्रतस्थे ।
गत्वाग्रतश्चाग्र्यतमाय तस्मै नान्दीविमुक्ताय ननाम नन्दः ॥६॥
शनैर्व्रजन्नेव स गौरवेण पटावृतांसो विनतार्धकायः ।
अधोनिबद्धाञ्जलिरूर्ध्वनेत्रः सगद्गदं वाक्यमिदं बभाषे ॥७॥

L has 1 a 1–4 b 3, (fol 8 a) 4 b 4 7 d 11

1 b, यथामूद्धिगृहीतवेषी P 2 a, °र्मद्दर्त्त P b, °वसे (m) नुजग्मुः P. d, °तत्पराषा P 3 b, चोतो P °ञ्जक्तिमतो P d, जरागमे P इवापगयाः LP. 4 b, सपू (or पु) ज्य° L d, भुरोर्म° P 5 a b, निम्यमुत्तुभक्ति P c, जिघिचंन् P. d, प्रपद्दे P. 7 a b, गोरवेनपटावृतासो P c °निवद्धञ्जलिरू° P d सगद्गंदराक्यमिदंबभावे P

प्रासादसंस्थो भगवन्तमन्तःप्रविष्टमश्रौषमनुग्रहाय ।
अतस्त्वरावानहमभ्युपेतो गृहस्य कक्ष्यामहतोऽभ्यसूयन् ॥८॥
तत्साधु साधुप्रिय मत्प्रियार्थं तत्रास्तु भिक्षूत्तम भैक्ष्यकालः ।
असौ हि मध्यं नभसो यियासुः कालं प्रतिस्मारयतीव सूर्यः ॥९॥
इत्येवमुक्तः प्रणतेन तेन स्नेहाभिमानोन्मुखलोचनेन ।
तादृग्निमित्तं सुगतश्चकार नाहारकृत्यं स यथा विवेद ॥१०॥
ततः स कृत्वा मुनये प्रणामं गृहप्रयाणाय मतिं चकार ।
अनुग्रहार्थं सुगतस्तु तस्मै पात्रं ददौ पुष्करपत्त्रनेत्रः ॥११॥
ततः स लोके ददतः फलार्थं पात्रस्य तस्याप्रतिमस्य पात्रं ।
जग्राह चापग्रहणक्षमाभ्यां पद्मोपमाभ्यां प्रयतः कराभ्यां ॥१२॥
पराङ्मुखस्त्वन्यमनस्कमाराद्विज्ञाय नन्दः सुगतं गतास्थं ।
हस्तस्थपात्रोऽपि गृहं यियासुः ससार मार्गान्मुनिमीक्षमाणः ॥१३॥
भार्यानुरागेण यदा गृहं स पात्रं गृहीत्वापि यियासुरेव ।
विमोहयामास मुनिस्ततस्तं रथ्यामुखस्यावरणेन तस्य ॥१४॥
निर्मोक्षबीजं हि ददर्श तस्य ज्ञानं मृदु क्लेशरजश्च तीव्रं ।
क्लेशानुकूलं विषयात्मकं च नन्दं यतस्तं मुनिराचकर्ष ॥१५॥
संक्लेशपक्षो द्विविधश्च दृष्टस्तथा द्विकल्पो व्यवदानपक्षः ।
आत्माश्रयो हेतुबलाधिकस्य बाह्याश्रयः प्रत्ययगौरवस्य ॥१६॥

L has 8 a 1 12 d 11, 13 a 1-a 3 f, a 9-b 4 p, b 5 c 1, c 2-c 10 p, c 11 14 c 11, d 1-d 11, 15 a 1 a 2 f a 8 b 1 b 2 p, 16 b 3 b 8 f, b 9 b 10 p, b 11 c 11, d 1-d 11 p.

9 b, तथास्त P. 10 a, इत्थिव° P प्रणयेन L, प्रणयितेनैनं P; G.c. c, P. om. ग्नि. c d, °यकामग्महार° P. 12 a, ततश्च P. फलार्थं P. c, °ग्रहन° P. 13 a, पराङ्मुखस्त्वयियामुन्यम° P, पराङ्मुखन्त्य° C a b, °मारावि° P. 14 c, वितोह° P. 15 a, निर्मोच° P b, ज्ञानमृदुं P. तीम्रः P c d, क्लेशाकूनान्विषयात्म(? त्स ?)तथनन्द P. 16 a संक्लेशपत्तो P c, आत्माश्रया P

अयत्नतो हेतुबलाधिकस्तु निर्मुच्यते घट्टितमात्र एव ।
यत्नेन तु प्रत्ययनेयबुद्धिर्विमोक्षमाप्नोति पराश्रयेण ॥१७॥
नन्दः स च प्रत्ययनेयचेता यं शिश्रिये तन्मयतामवाप ।
यस्मादिमं तत्र चकार यत्नं तं स्नेहपङ्कान्मुनिरुज्जिहीर्षन् ॥१८॥
नन्दस्तु दुःखेन विचेष्टमानः शनैरगत्या गुरुमन्वगच्छत् ।
भार्यामुखं वीक्षणलोलनेत्रं विचिन्तयन्नार्द्रविशेषकं तत् ॥१९॥
ततो मुनिस्तं प्रियमाल्यहारं वसन्तमासेन कृताभिहारं ।
निनाय भग्नप्रमदाविहारं विद्याविहाराभिमतं विहारं ॥२०॥
दीनं महाकारुणिकस्ततस्तं दृष्ट्वा मुहूर्तं करुणायमानः ।
करेण चक्राङ्कतलेन मूर्ध्नि पस्पर्श चैवेदमुवाच चैनं ॥२१॥
यावन्न हिंस्रः समुपैति कालः शमाय तावत्कुरु सौम्य बुद्धिं ।
सर्वास्ववस्थास्विह वर्तमानः सर्वाभिसारेण निहन्ति मृत्युः ॥२२॥
साधारणात्स्वप्ननिभादसाराल्लोलं मनः कामसुखान्नियच्छ ।
हव्यैरिवाग्नेः पवनेरितस्य लोकस्य कामैर्न हि तृप्तिरस्ति ॥२३॥
श्रद्धाधनं श्रेष्ठतमं धनेभ्यः प्रज्ञारसस्तृप्तिकरो रसेभ्यः ।
प्रधानमध्यात्मसुखं सुखेभ्यो विद्यारतिर्दुःखतमा रतिभ्यः ॥२४॥
हितस्य वक्ता प्रवरः सुहृद्भ्यो धर्माय खेदो गुणवान् श्रमेभ्यः ।
ज्ञानाय कृत्यं परमं क्रियाभ्यः किमिन्द्रियाणामुपगम्य दास्यं ॥२५॥

*L has 17 a 1 a 9 f, 18 d 11 p, 19 a 1-a 4, (fol 8 b) 19 a 5-b 5 p, 21 c 1-22 a 11, b 1-c 2 f, c 10 p, d 1-d 3, 23 d 4 d 6 f, d 7 25 a 8, a 9-b 2 p, b 11-c 5 p, c 6 c 11, d 1-d 9 p, d 10 d 11*

17 d, पराश्रयं(or य)न P 18 a, मत्ययनेमचेता P, Cc c, चत्र P. d, तस्नेह° P, तत्स्नेह° C, Gc °रुजिहीर्षन् P 19 a, दुःचेन L d, विचिंचेयन्नाद्र्° P. 20 c, भप्रंम° P, Cc 21 a, P om का b, करुणायतानः P c, मुद्धि P 22 a, काल P. b, घौम्य P. c, वत्तमानं P, L om. नः, वर्त्तमानं C 23 b, °मुखां-नि° P. 24 a, श्रिष्टतमं P c, मुखेभ्यो P. d, ऽविद्या° C 25 a, सुहृभ्यो P b, ख(or खं)दो P. c प्रियाभ्यः PC, Gc d, कामेन्द्रि° P

तन्निश्रितं भीक्रमशुग्वियुक्तं परेष्वनायत्तमहार्यमन्यैः ।
नित्यं शिवं शान्तिसुखं वृणीष्व किमिन्द्रियार्थार्थमनर्थमूढ्वा ॥२६॥
जरासमा नास्त्यमृजा प्रजानां व्याधेः समो नास्ति जगत्यनर्थः ।
मृत्योः समं नास्ति भयं पृथिव्यामेतत्त्रयं खल्ववशेन सेव्यं ॥२७॥
स्नेहेन कश्चिन्न समोऽस्ति पाशः स्रोतो न तृष्णासममस्ति हारि ।
रागाग्निना नास्ति समस्तथाग्निस्तच्चेत्त्रयं नास्ति सुखं च तेऽस्ति ॥२८॥
अवश्यभावी प्रियविप्रयोगस्तस्माच्च शोको नियतं निषेव्यः ।
शोकेन चोन्मादमुपेयिवांसो राजर्षयोऽन्येऽप्यवशा विचेलुः ॥२९॥
प्रज्ञामयं वर्म बधान तस्मान्नो क्षान्तिनिघ्नस्य हि शोकबाणाः ।
महच्च दग्धुं भवकक्षजालं संधुक्षयाल्पाग्निमिवात्मतेजः ॥३०॥
यथौषधैर्हस्तगतैः सविद्यो न दश्यते कश्चन पन्नगेन ।
तथानपेक्षो जितलोकमोहो न दश्यते शोकभुजंगमेन ॥३१॥
आस्थाय योगं परिगम्य तत्त्वं न त्रासमागच्छति मृत्युकाले ।
आबद्धवर्मा सुधनुः कृतास्त्रो जिगीषया शूर इवाहवस्थः ॥३२॥
इत्येवमुक्तः स तथागतेन सर्वेषु भूतेष्वनुकम्पकेन ।
धृष्टं गिरान्तर्हृदयेन सीदंस्तथेति नन्दः सुगतं बभाषे ॥३३॥
अथ प्रमादाच्च तमुज्जिहीर्षन्मत्वागमस्यैव च पात्रभूतं ।
प्रव्राजयानन्द शमाय नन्दमित्यब्रवीन्मैत्रमना महर्षिः ॥३४॥

I has 26 a 1 33 c 3 (fol. 91) 33 c 4 34 d 11

26 b. °माप्तम° P d किमैन्द्रिया° P °मूढा P. 27 a b. नास्त्यिमुजाप्रजाना- व्याधिः P d. °वसेन P 28 b. तृष्णासाम° P. हाचि P. d. °त्रय P. 29 c. चोन्माद° P d. राजर्षयोन्य P 30 a b. तस्मान्निष्यान्ति° L, तस्मात्निष्यान्ति° P. तस्मात्नैष्यन्ति C, तस्मान्नो शान्ति° J b. सोक° P d. °यात्मापि° P. 31 a. यथोप° LP सविद्यो PC b and d. दृश्यते P 33 d. नन्द LP 34 a b. तमुज्जिहीर्षम° P b पातमृत P. d. °ब्रवीमि° P

नन्दं ततोऽन्तर्मनसा रुदन्तमेहीति वैदेहमुनिर्जगाद ।
शनैस्ततस्तं समुपेत्य नन्दो न प्रव्रजिष्याम्यहमित्युवाच ॥ ३५ ॥
श्रुत्वाथ नन्दस्य मनीषितं तद्बुद्धाय वैदेहमुनिः शशंस ।
संश्रुत्य तस्मादपि तस्य भावं महामुनिर्नन्दमुवाच भूयः ॥ ३६ ॥

मय्यग्रजे प्रव्रजितेऽजितात्मन्
भ्रातृष्वनुप्रव्रजितेषु चास्मान् ।
ज्ञातींश्च दृष्ट्वा व्रतिनो गृहस्थान्
संविन्नवित्तेऽस्ति न वास्ति चेतः ॥ ३७ ॥

राजर्षयस्ते विदिता न नूनं वनानि ये शिश्रियिरे हसन्तः ।
निष्ठीव्य कामानुपशान्तिकामाः कामेषु नैवं कृपणेषु सक्ताः ॥ ३८ ॥
भूयः समालोक्य गृहेषु दोषान्निशाम्य तत्त्यागकृतं च शर्म ।
नैवास्ति मोक्तुं मतिरालयं ते देशं मुमूर्षोरिव सोपसर्गं ॥ ३९ ॥
संसारकान्तारपरायणस्य शिवे कथं ते पथि नारुरुक्षा ।
आरोप्यमाणस्य तमेव मार्गं भ्रष्टस्य सार्थादिव सार्थिकस्य ॥ ४० ॥
यः सर्वतो वेश्मनि दह्यमाने शयीत मोहान्न ततो व्यपेयात् ।
कालाग्निना व्याधिजराशिखेन लोके प्रदीप्ते स भवेत्प्रमत्तः ॥ ४१ ॥
प्रणीयमानश्च यथा वधाय मत्तो हसेच्च प्रलपेच्च वध्यः ।
मृत्यौ तथा तिष्ठति पाशहस्ते शोच्यः प्रमाद्यन्विपरीतचेताः ॥ ४२ ॥

L has 35 a 1–42 b 8, b 9–c 1 p, c 10–d 5 f, d 6 p, d 7 d 11

35 b, वैवेहमुनिज॰ P c, समयेत्य P 36 b, ॰मुनि L वैदहमुनि P d, महामुनीन॰ P. 37 a, मर्थ्य॰ P प्रव्रजिते जि॰ LPC b भातृ॰ P चा त्मान् P c, घतीयदृष्टा P, दृष्टा L d, संविन्नचि(? वि ?)त्ते L, सविमचित्ते P, संविन्न कि ते G 38 d, छपनेषु 39 a भूय P b ॰छतचर्म्मं P c मोक्तु LP मतिला(m)लयं P. d, मुमूर्खोरिवसोपसर्गं P, मुमुचोरिव or देहं मुमूर्षो॰ G 41 a, वेस्मनि LP. b, मोहावततो P c, ॰गिखेन P d, प्रदीपे LP, C c प्रसन्नः G 42 b, प्रलयेच्च P.

यदा नरेन्द्राश्च कुटुम्बिनश्च विहाय बन्धूंश्च परिग्रहांश्च ।
ययुश्च यास्यन्ति च यान्ति चैव प्रियेष्वनित्येषु कुतोऽनुरोधः ॥४३॥
किंचिन्न पश्यामि रतस्य यत्र तदन्यभावेन भवेन्न दुःखं ।
तस्मात्क्वचिन्न क्षमते प्रसक्तिर्यदि क्षमस्तद्विगमान्न शोकः ॥४४॥
तत्सौम्य लोलं परिगम्य लोकं मायोपमं चित्तमिवेन्द्रजालं ।
प्रियाभिधानं त्यज मोहजालं छेत्तुं मतिस्ते यदि दुःखजालं ॥४५॥
वरं हितोदर्कमनिष्टमन्नं न स्वादु यत्स्यादहितानुबद्धं ।
यस्मादहं त्वा विनियोजयामि शिवे शुचौ वर्त्मनि विप्रियेऽपि ॥४६॥
बालस्य धात्री विनिगृह्य लोष्टं यथोद्धरत्यास्यपुटप्रविष्टं ।
तथोज्जिहीर्षुः खलु रागशल्यं तत्त्वामवोचं परुषं हिताय ॥४७॥
अनिष्टमप्यौषधमातुराय ददाति वैद्यश्च यथा निगृह्य ।
तद्वन्मयोक्तं प्रतिकूलमेतत्तुभ्यं हितोदर्कमनुग्रहाय ॥४८॥
तद्यावदेव क्षणसंनिपातो न मृत्युरागच्छति यावदेव ।
यावद्वयो योगविधौ समर्थं बुद्धिं कुरु श्रेयसि तावदेव ॥४९॥
इत्येवमुक्तः स विनायकेन हितैषिणा कारुणिकेन नन्दः ।
कर्तास्मि सर्वं भगवन्वचस्ते तथा यथाज्ञापयसीत्युवाच ॥५०॥

L has 43 a 1 a 2 p a 11 b 5 p 1 6-44 b 1, b 2 b 5 f b 10 c 4 f, d 2-d 6 p 46 a 1 a 11 b 1 b 8 ], [ 9-c 7 f, 48 c 1 c 3 f, (fol 9 1) 48 c 4 c 7 f

43 b बन्धूश्चपरिग्रहाश्च P d, प्रियेश्वप्यनि° P 44 b, दु.खा P c, चमते P d चमस्तद्विग° P 45 a, परिचगम्य P b, चित्तमिवेन्द्र° P, H and S c c, तोह-भाल P d, छित्तु P चदि P 46 a, घर P. °मषिष्ट° P, °ममिष्ट° G c, °हणविनि° P d, गिवेश्व (or श्च) चौवत्सनि P, C c 47 a, विनिगर्ह्य G b, °त्याश्वपुट° P, J and G c c, तयोर्ज्जि° P d तन्त्वाम° P 48 a °मात्तराय P 50 c, भमघन्व° P

आदाय वैदेहमुनिस्ततस्तं निनाय संश्लिष्य विचेष्टमानं ।
व्ययोजयच्चाश्रुपरिप्लुताक्षं केशश्रियं छत्त्रनिभस्य मूर्ध्नः ॥५१॥
अथो नतं तस्य मुखं सबाष्पं प्रवास्यमानेषु शिरोरुहेषु ।
वक्राग्रनालं नलिनं तडागे वर्षोदकक्लिन्नमिवाबभासे ॥५२॥

नन्दस्ततस्तरुकषायविरक्तवासा-
श्चिन्तावशो नवगृहीत इव द्विपेन्द्रः ।
पूर्णः शशी बहुलपक्षगतः क्षपान्ते
बालातपेन परिषिक्त इवाबभासे ॥५३॥

सौन्दरनन्दे महाकाव्ये नन्दप्रव्राजनो नाम पञ्चमः सर्गः ।

L has 51 a 6–b 11, c 1–c 6 p, c 7–c 9 f, d 7–d 11 f, 52 a 1 a 3 f, a 9–b 1 p, 53 b 8–b 10 p, b 11 end

51 a, °स्ततस्थं P b, संक्लिश्यिप्यविचेष्ट° P c, °परिप्लुताचं P d, °श्रिया G
52 a अथोतु(?)तं P, रुतं O, अधोधृत J; no subscript vowel according to L, G c सवाप्य P. b, प्रवाप्यमाणेषु H d, वर्षादक° P. 53 b, द्विधेन्द्रः P. c, पुर्णः (or पुन्नः) L, पुर्णः P col, सौन्दरा° P. P omits ना of नाम

## CANTO VI

ततो हृते भर्तरि गौरवेण प्रीतौ हृतायामरतौ कृतायां ।
तत्रैव हर्म्योपरि वर्तमाना न सुन्दरी सैव तदा बभासे ॥१॥
सा भर्तुरभ्यागमनप्रतीक्षा गवाक्षमाक्रम्य पयोधराभ्यां ।
द्वारोन्मुखी हर्म्यतलाल्ललम्बे मुखेन तिर्यङ्नतकुण्डलेन ॥२॥
विलम्बहारा चलयोक्त्रका सा तस्माद्विमानाद्विनता चकाशे ।
तपःक्षयादप्सरसां वरेव च्युतं विमानात्प्रियमीक्षमाणा ॥३॥
सा खेदसंस्विन्नललाटकेन निश्वासनिष्पीतविशेषकेण ।
चिन्ताचलाक्षेण मुखेन तस्थौ भर्तारमन्यत्र विशङ्कमाना ॥४॥
ततश्चिरस्थानपरिश्रमेण स्थितैव पर्यङ्कतले पपात ।
तिर्यक्च शिश्ये प्रविकीर्णहारा सपादुकैकार्धविलम्बपादा ॥५॥
अथात्र काचित्प्रमदा सवाष्पां तां दुःखितां द्रष्टुमनीप्समाना ।
प्रासादसोपानतलप्रणादं चकार पद्भ्यां सहसा रुदन्ती ॥६॥
तस्याश्च सोपानतलप्रणादं श्रुत्वैव तूर्णं पुनरुत्पपात ।
प्रीत्या प्रसक्तेव च संजहर्ष प्रियोपयानं परिशङ्कमाना ॥७॥

L has 1 a1 a10f a11 b7p 1 8–c4 c5–d2f d3 2a3p a4 7d11

1 a गोरवेण P b हृताया P 2 d तिर्यंश्नत° L निर्यन्नत° P 3 a °योक्तुका P b °नता P d च्युता P °मीषमाणा P 4 a खेदसंश्वि(?)न्न° L b, नि:श्वास° P d भर्त्तारम° P 5 b पर्य्यन्तले P d सपादुकैका (perhaps originally °का)र्द्ध° L, सपादुकैवर्द्धिविलवपादा P G c 6 a b सवाष्प(? or ष्प)ां ता दुःखिता P तादुःखिता L सवाष्पा G 7 c प्रसक्तेव LPC प्रसह्येव G

सा त्रासयन्ती वलभीपुटस्थान् पारावतान्नूपुरनिस्वनेन ।
सोपानकुक्षिं प्रससार हर्षाद्भ्रष्टं दुकूलान्तमचिन्तयन्ती ॥८॥
तामङ्गनां प्रेक्ष्य च विप्रलब्धा निश्वस्य भूयः शयनं प्रपेदे ।
विवर्णवक्त्रा न रराज चाशु विवर्णचन्द्रेव हिमागमे द्यौः ॥९॥
सा दुःखिता भर्तुरदर्शनेन कामेन कोपेन च दह्यमाना ।
कृत्वा करे वक्त्रमुपोपविष्टा चिन्तानदीं शोकजलां ततार ॥१०॥
तस्या मुखं पद्मसपत्नभूतं पाणौ स्थितं पल्लवरागताम्रे ।
छायामयस्याम्भसि पङ्कजस्य बभौ नतं पद्ममिवोपरिष्टात् ॥११॥
सा स्त्रीस्वभावेन विचिन्त्य तत्तद्दृष्टानुरागेऽभिमुखेऽपि पत्यौ ।
धर्माश्रिते तत्त्वमविन्दमाना संकल्प्य तत्तद्विललाप तत्तत् ॥१२॥
एष्याम्यनाश्यानविशेषकायां त्वयीति कृत्वा मयि तां प्रतिज्ञां ।
कस्मान्नु हेतोर्दयितप्रतिज्ञः सोऽद्य प्रियो मे वितथप्रतिज्ञः ॥१३॥
आर्यस्य साधोः करुणात्मकस्य मन्नित्यभीरोरतिदक्षिणस्य ।
कुतो विकारोऽयमभूतपूर्वः स्वेनापरागेण ममापचारात् ॥१४॥

रतिप्रियस्य प्रियवर्तिनो मे
प्रियस्य नूनं हृदयं विरक्तं ।
तथापि रागो यदि तस्य हि स्यान्
मच्चित्तरक्षी न स नागतः स्यात् ॥१५॥

L has 8 a 1–9 b 7, (fol 10 a) 9 b 8–15 d 11

8 a, वडभी° LP b, °वतात्तू(?)पुर° P. d, °चित्तयन्ती P. 9 a, प्रेच P. b, भूय P. c d, चाद्यविवण्ड(?)र्णच° P. d, हिमागम P 10 a, दुःचिता LP. °दर्शणो(?)न P. b, कामिनकोपेन P दहमाना L. c, वतुमयोपविष्टा P d, °नदी P. 11 a, °सयत्न° P. b, पल्लवत्वा (or त्ना) गताम्ले P 12 b, विमुखे G d, P om. प. 14 c, विचारो P. °पूर्व LP 15 c, तथाहि LP, तथैव or else तथा विरागो यदि तस्य न स्यात् G. d, °रचीणसमागतः P

रूपेण भावेन च मद्विशिष्टा प्रियेण दृष्टा नियतं ततोऽन्या ।
तथा हि कृत्वा मयि मोघसान्त्वं लग्नां सतीं मामगमद्विहाय ॥१६॥
भक्तिं स बुद्धं प्रति यामवोचत्तस्य प्रयातुं मयि सोपदेशः ।
मुनौ प्रसादो यदि तस्य हि स्यान्मृत्योरिवोग्रादनृताद्विभीयात् ॥१७॥
सेवार्थमादर्शनमन्यचित्तो विभूषयन्त्या मम धारयित्वा ।
बिभर्ति सोऽन्यस्य जनस्य तं चेन्नमोऽस्तु तस्मै चलसौहृदाय ॥१८॥
नेच्छन्ति याः शोकमवाप्नुमेवं श्रद्धातुमर्हन्ति न ता नराणां ।
क्व चानुवृत्तिर्मयि सास्य पूर्वं त्यागः क्व चायं जनवत्क्षणेन ॥१९॥
इत्येवमादि प्रियविप्रयुक्ता प्रियेऽन्यदाशङ्क्य च सा जगाद ।
संभ्रान्तमारुह्य च तद्विमानं तां स्त्री सबाष्पा गिरमित्युवाच ॥२०॥
युवापि तावत्प्रियदर्शनोऽपि सौभाग्यभाग्याभिजनान्वितोऽपि ।
यस्त्वां प्रियो नाभ्यचरत्कदाचित्तमन्यथा यास्यतिकातरासि ॥२१॥
मा स्वामिनं स्वामिनि दोषतो गाः प्रियं प्रियार्हं प्रियकारिणं तं ।
न स त्वदन्यां प्रमदामवैति स्वचक्रवाक्या इव चक्रवाकः ॥२२॥
स तु त्वदर्थं गृहवासमीप्सन् जिजीविषुस्त्वत्परितोषहेतोः ।
भ्रात्रा किलार्येण तथागतेन प्रव्राजितो नेत्रजलार्द्रवक्त्रः ॥२३॥

L has 16 a 1–17 d 1, d 2 p d 3 d 5 f, 18 a 5 a 9 f, a 10 a 11, b 1–b 7 p, b 8 b 11 f, c 4 f c 5 19 c 5 c 6–d 5 p 20 a 2–a 6 f c 5–c 6 f, 21 a 6 a 10 f, a 11–c 10 c 11 d 2 f, 23 c 1 f c 2 c 5 (fol 10 b) 23 c 6–c 11, d 1 d 11 p.

16 a यद्विशिष्टा LP II c d सती P 17 c, मुनो P. d, °वोरग्रंदनृतद्वि° P, Gc 18 a सेवार्थं° P Gc °मादर्शमनन्य° C c, तच्चेन्न° P 19 a, या LP °मवाप्तु°(?) P °मेत G b °मर्हन्ति P c, चानुवृर्त्ति° P. 20 b, °दाशंक्य P. c, °मारुह्य P d तास्त्री P, सा स्त्री C. 21 c, °चरत्क° L, नाव्यहक्र(?)त्क° P d, यास्यंसिकातरासि P, °त्वमन्यथायस्यसि कातरासिन् S, °त्तमन्यथा यास्यसि H 22 a, दोपमागाः P, Gc 1, प्रियाहंप्रियकारिनं P 23 a, त्वदर्थ P. °मीप्सन् P b °हेतो° P

श्रुत्वा ततो भर्तरि तां प्रवृत्तिं सवेपथुः सा सहसोत्पपात ।
प्रगृह्य बाहू विरराव चोच्चैर्हृदीव दिग्धाभिहता करेणुः ॥२४॥
सा रोदनारोपितरक्तदृष्टिः संतापसंक्षोभितगात्रयष्टिः ।
पपात शीर्णाकुलहारयष्टिः फलातिभारादिव चूतयष्टिः ॥२५॥
सा पद्मरागं वसनं वसाना पद्मानना पद्मदलायताक्षी ।
पद्मा विपद्मा पतितेव लक्ष्मीः शुशोष पद्मस्रगिवातपेन ॥२६॥
संचिन्त्य संचिन्त्य गुणांश्च भर्तुर्दीर्घं निशश्वास तताम चैव ।
विभूषणश्रीनिहिते प्रकोष्ठे ताम्रे कराग्रे च विनिर्दुधाव ॥२७॥
न भूषणार्थो मम संप्रतीति सा दिक्षु चिक्षेप विभूषणानि ।
निर्भूषणा सा पतिता चकाशे विशीर्णपुष्पस्तबका लतेव ॥२८॥
धृतः प्रियेणायमभून्ममेति रुक्मत्सरुं दर्पणमालिलिङ्गे ।
यत्नाच्च विन्यस्ततमालपत्रौ रुष्टेव धृष्टं प्रममार्ज गण्डौ ॥२९॥
सा चक्रवाकीव भृशं चुकूज श्येनाग्रपक्षक्षतचक्रवाका ।
विस्पर्धमानेव विमानसंस्थैः पारावतैः कूजनलोलकण्ठैः ॥३०॥
विचित्रमृद्वास्तरणेऽपि सुप्ता वैडूर्यवज्रप्रतिमण्डितेऽपि ।
रुक्माङ्गपादे शयने महार्हे न शर्म लेभे परिचेष्टमाना ॥३१॥

L has 25 d 7 f d 8 26 b 11, c 1–c 3 p, c 4–c 5 f c 11–d 3 f, 27 a 1–a 4 f, c 5–c 6 p, 28 a 6–a 11 f, b 1–29 c 3 c 4–c 9 p, d 2–d 10 f, d 11 30 a 1 p, a 2–a 6, a 7–a 11 p, b 1–b 9 f, b 10 p, b 11–31 d 11

24 a, भत्तुरि P प्रवृत्तिं P c d, चोच्चैर्हृदीवदग्धा° (or ग्धा°) P 26 c, लाक्षी: P. d, शुशोषपद्मस्र° P. 27 a, गुणाश्च P b, °दीर्घं P c d. °निहिताप्रतोष्ठे (?) P, °श्रीर्निहिता प्रकोष्ठे C 28 a, न भूषणेऽर्थो C 29 a °भून्ममेति P b, रुक्मत्सरु L, रुक्म° P. d, वृष्ट P 30 b, श्येनाग्र्यपक्ष° P d कूजन° L 31 b, °वज्र° P. c, रुक्माङ्ग° LP d, परिविष्ट° LP

संदृश्य भर्तुश्च विभूषणानि वासांसि वीणाप्रभृतींश्च लीलाः ।
तमो विवेशाभिननाद चोच्चैः पङ्कावतीर्णेव च संससाद ॥३२॥
सा सुन्दरी श्वासचलोदरी हि वज्राग्निसंभिन्नदरीगुहेव ।
शोकाग्निनान्तर्हृदि दह्यमाना विभ्रान्तचित्तेव तदा बभूव ॥३३॥
रुरोद मम्लौ विरुराव जग्लौ बभ्राम तस्थौ विललाप दध्यौ ।
चकार रोषं विचकार माल्यं चकर्त वक्त्रं विचकर्ष वस्त्रं ॥३४॥
तां चारुदन्तीं प्रसभं रुदन्तीं संश्रुत्य नार्यः परमाभितप्ताः ।
अन्तर्गृहादारुरुहुर्विमानं त्रासेन किंनर्य इवाद्रिपृष्ठं ॥३५॥
बाष्पेण ताः क्लिन्नविषण्णवक्त्रा वर्षेण पद्मिन्य इवार्द्रपद्माः ।
स्थानानुरूपेण यथाभिमानं निलिल्यिरे तामनु दह्यमानाः ॥३६॥
ताभिर्वृता हर्म्यतलेऽङ्गनाभिश्चिन्तातनुः सा सुतनुर्बभासे ।
शतह्रदाभिः परिवेष्टितेव शशाङ्कलेखा शरदभ्रमध्ये ॥३७॥
या तत्र तासां वचसोपपन्ना मान्या च तस्या वयसाधिका च ।
सा पृष्ठतस्तां तु समालिलिङ्गे प्रमृज्य चाश्रूणि वचांस्युवाच ॥३८॥
राजर्षिवध्वास्तव नानुरूपो धर्माश्रिते भर्तरि जातु शोकः ।
इक्ष्वाकुवंशे ह्यभिकाङ्क्षितानि दायाद्यभूतानि तपोवनानि ॥३९॥
प्रायेण मोक्षाय विनिःसृतानां शाक्यर्षभाणां विदिताः स्त्रियस्ते ।
तपोवनानीव गृहाणि यासां साध्वीव्रतं कामवदाश्रितानां ॥४०॥

L has 32 a 1–38 a 10 (fol 11 a) 38 a 11–40 d 11

32 l, लीढाः LP d गीः ससाद् G 33 b वजाग्नि° P c, सोकार्गिना-तुर्हदि P d, °चित्तवचदा P 34 a, जग्लौ P b, दध्मौ LP, 8 c d, वक्तु(?) P. 35 a, चरुदन्ती LP. l, सश्रुत्य LP 36 a, °विपर्ण° P. 37 a, ङ्गणाभि° P. d, सरद्° P 38 a, तासा P c, पृष्ठतस्ताच P 39 b, भर्त्तरि L, P uncertain c, इस्वाकू° L °काचितानि LP. 40 b, विदिता LP स्त्रियस्ता P d, साध्विव्रतं L, साध्विपय P

यद्यन्यया रूपगुणाधिकत्वाद्भर्ता हृतस्ते कुरु बाष्पमोक्षं ।
मनस्विनी रूपवती गुणाढ्या हृदि क्षते काच हि नास्रु मुञ्चेत् ॥४१॥
अथापि किंचिद्व्यसनं प्रपन्नो मा चैव तद्भूत्सदृशोऽत्र बाष्पः ।
अतो विशिष्टं न हि दुःखमस्ति कुलोद्गतायाः पतिदेवतायाः ॥४२॥
अथ त्विदानीं लडितः सुखेन स्वस्थः फलस्थो व्यसनान्यदृष्ट्वा ।
वीतस्पृहो धर्ममनुप्रपन्नः किं विक्लवे रोदिषि हर्षकाले ॥४३॥
इत्येवमुक्तापि बहुप्रकारं स्नेहात्तया नैव धृतिं चकार ।
अथापरा तां मनसोऽनुकूलं कालोपपन्नं प्रणयादुवाच ॥४४॥
ब्रवीमि सत्यं सुविनिश्चितं मे प्राप्तं प्रियं द्रक्ष्यसि शीघ्रमेव ।
त्वया विना स्थास्यति तत्र नासौ सत्त्वाश्रयश्चेतनयेव हीनः ॥४५॥

अङ्केऽपि लक्ष्म्या न स निर्वृतः स्यात्
त्वं तस्य पार्श्वे यदि तत्र न स्याः ।
आपत्सु कृच्छ्रास्वपि चागतासु
त्वां पश्यतस्तस्य भवेन्न दुःखं ॥४६॥

त्वं निर्वृतिं गच्छ नियच्छ बाष्पं तप्ताश्रुमोक्षात्परिरक्ष चक्षुः ।
यस्तस्य भावस्त्वयि यश्च रागो न रंस्यते त्वद्विरहात्स धर्मे ॥४७॥

L has 41 a 1 44 d 9 d 10–45 a 2 p a 3 46 b 4 b 5 b 7 p b 8 b 11 d 6–d 8 p d 9–d 10 d 11 47 a 3 f b 7 b 11 f c 1–c 3 p c 4–d 11

41 a °गुणाविकला° P b वाष्पतो(?)घ P 42 b वाष्प P 43 a P om लडि and adds चलि above in margin d कि L विक्लवा PH 44 b स्ने(?)हात्तया L स्तदातया P वृति P c नामनसो P 45 a °श्चितप्म(?) P c, स्थास्याति L 46 c छच्छ्रास्व° P 47 a पियच्छपाप्य P

स्यादत्र नासौ कुलसत्त्वयोगात्काषायमादाय विहास्यतीति ।
अनात्मनादाय गृहोन्मुखस्य पुनर्विमोक्तुं क इवास्ति दोषः ॥४८॥
इति युवतिजनेन सान्त्व्यमाना हृतहृदया रमणेन सुन्दरी सा ।
द्रमिडमभिमुखी पुरेव रम्भा क्षितिमगमत्परिवारिताप्सरोभिः ॥४९॥

सौन्दरनन्दे महाकाव्ये भार्याविलापो नाम षष्ठः सर्गः ।

L has 48 a 1–a 11, b 1–b 3 f, b 10–c 4 f, 49 b 1–b 2 f, d 7–d 8 f, d 9–d 13, col., 1–12 f

48 c d, गृहोन्मुखस्ययुन° P. d, कइनिमास्ति P. 49 a, सान्त्व° P. b, हतहृदया H. रमणेव P; C.c. c, °भिमुचे P, °भिमुखे C; H.c. col., सौन्दरा° P. षष्ठमः P.

## CANTO VII

लिङ्गं ततः शास्तृविधिप्रदिष्टं गात्रेण बिभ्रन्न तु चेतसा तत् ।
भार्यागतैरेव मनोवितर्कैर्जेह्रीयमाणो न ननन्द नन्दः ॥१॥
स पुष्पमासस्य च पुष्पलक्ष्म्या सर्वाभिसारेण च पुष्पकेतोः ।
यानीयभावेन च यौवनस्य विहारसंस्थो न शमं जगाम ॥२॥
स्थितः स दीनः सहकारवीथ्यामालीनसंमूर्छितषट्पदायां ।
भृशं जजृम्भे युगदीर्घबाहुर्ध्यात्वा प्रियां चापमिवाचकर्ष ॥३॥
स पीतकक्षोदमिव प्रतीच्छन् चूतद्रुमेभ्यस्तनुपुष्पवर्षं ।
दीर्घं निशश्वास विचिन्त्य भार्यां नवग्रहो नाग इवावरुद्धः ॥४॥
शोकस्य हर्ता शरणागतानां शोकस्य कर्ता प्रतिगर्वितानां ।
अशोकमालम्ब्य स जातशोकः प्रियां प्रियाशोकवनां शुशोच ॥५॥
प्रियां प्रियायाः प्रतनुं प्रियङ्गुं निशाम्य भीतामिव निष्पतन्तीं ।
सस्मार तामश्रुमुखीं सबाष्पः प्रियां प्रियङ्गुप्रसवावदातां ॥६॥
पुष्पावनद्धे तिलकद्रुमस्य दृष्ट्वान्यपुष्टां शिखरे निविष्टां ।
संकल्पयामास शिखां प्रियायाः शुक्लांशुकेऽट्टालमपाश्रितायाः ॥७॥

L has 2 c 8 p, (fol 11 b) 2 c 9–d 3 p, d 4–d 8 f, 5 b 1–c 6, c 7–c 9 p, 7 c 2–c 3 p c 4–d 11

1 a, ततश्चास्तुषिधि° PC, ततः शास्त्रविधि° J, ततशास्त्र° or ततश्चात्म° G, Sc b, गात्रेन P c, °वितर्क्कौ° P d, यो ह्रीयमानो PC, Hc, 2 d, सम P. 3 a, स्महकारवीध्या° P, Cc b, °समुर्च्छि° P c, भृसं P 4 a, सपातक.चो° P प्रतीच्छ P. c, भार्या P d, °ग्रहोइवनागावबुद्धः P, Gc 5 a, सोकस्य P b पतिग° P c, असोक° P d, शुशोच P 6 a प्रियभु P Cc d, प्रियसप्रसवा-षदाता P, Cc 7 b, सिखरे P d अ(?)क्षामुकात्याल° L, अक्षाग्र(?)काद्या(?)ल° P

लतां प्रफुल्लामतिमुक्तकस्य चूतस्य पार्श्वे परिरभ्य जातां ।
निशाम्य चिन्तामगमत्तदैवं श्लिष्टाभवन्मामपि सुन्दरीति ॥८॥
पुष्पोत्कराला अपि नागवृक्षा दान्तैः समुद्गैरिव हेमगर्भैः ।
कान्तारवृक्षा इव दुःखितस्य न चक्षुराचिक्षिपुरस्य तत्र ॥९॥
गन्धं वसन्तोऽपि च गन्धपर्णा गन्धर्ववेश्या इव गन्धपूर्णाः ।
तस्यान्यचित्तस्य शुगात्मकस्य घ्राणं न जह्रुर्हृदयं प्रतेपुः ॥१०॥
संरक्तकण्ठैश्च विनीलकण्ठैस्तुष्टैः प्रहृष्टैरपि चान्यपुष्टैः ।
लेलिह्यमानैश्च मधु द्विरेफैः स्वनद्वनं तस्य मनो नुनोद ॥११॥
स तत्र भार्यारणिसंभवेन वितर्कधूमेन तमःशिखेन ।
कामाग्निनान्तर्हृदि दह्यमानो विहाय धैर्यं विललाप तत्तत् ॥१२॥
अद्यावगच्छामि सुदुष्करं ते चक्रुः करिष्यन्ति च कुर्वते च ।
त्यक्त्वा प्रियामश्रुमुखीं तपो ये चेरुश्चरिष्यन्ति चरन्ति चैव ॥१३॥
तावद्दृढं बन्धनमस्ति लोके न दारवं तान्तवमायसं वा ।
यावद्दृढं बन्धनमेतदेव मुखं चलाक्षं ललितं च वाक्यं ॥१४॥
छित्त्वा च भित्त्वा च हि यान्ति तानि स्वपौरुषाच्चैव सुहृद्बलाच्च ।
ज्ञानाच्च रौक्ष्याच्च विना विमोक्तुं न शक्यते स्नेहमयस्तु पाशः ॥१५॥

L has 8 a 1 a 6 a 7–b 2 f b 3 b 10 b 11–c 8 p 9 a 3 f a 4 a 6 p a 7 a 8 c 8–c 11 f d 1–d 4 p d 5 11 a 11 b 1 b 11 p c 1–c 11 d 1 12 a 1 p a 2 15 d 11

8 c °मगमत्कदैव G d श्लिष्टाभवेत्मा° P 9 a पुष्पोत्तु(?)रेगा P पुष्पैरत्राला C for L see notes b समुगैरिव I C c °गभे P c दु खितस्य LP d °चिपुरेस्य P 10 a गन्धपूर्णा LPC b गन्धर्वदेश्या I C गन्धर्ववेस्या P c शुखात्म° P d अघ्रु(?)हृदय प्रतेपु I 11 a °कण्ठैरपि नील° PC d सुनद्वन L app. तस्यनुनो(?)द (with मनो added above in different hand after स्य) P 12 c कामाग्निनातद्यपिदह्य° P 13 c त्यक्ता LP तयाये P 14 b राक्षरमायस P c वदनमे° LP d चराच P चाक्ष L 15 a, भित्वाव P

ज्ञानं न मे तच्च शमाय यत्स्यान्न चास्ति रौक्ष्यं करुणात्मकोऽस्मि ।
कामात्मकश्चास्मि गुरुश्च बुद्धः स्थितोऽन्तरे चक्रगतेरिवास्मि ॥१६॥
अहं गृहीत्वापि हि भिक्षुलिङ्गं भ्रातृर्षिणा द्विर्गुरुणानुशिष्टः ।
सर्वास्ववस्थासु लभे न शान्तिं प्रियावियोगादिव चक्रवाकः ॥१७॥
अद्यापि तन्मे हृदि वर्तते च यद्दर्पणे व्याकुलिते मया सा ।
कृतानृतक्रोधकमब्रवीन्मां कथं कृतोऽसीति शठं हसन्ती ॥१८॥
यथैष्यनाश्यानविशेषकायां मयीति यन्मामवदच्च साश्रु ।
पारिप्लवाक्षेण मुखेन बाला तन्मे वचोऽद्यापि मनो रुणद्धि ॥१९॥
बद्ध्वासनं पर्वतनिर्झरस्थः स्वस्थो यथा ध्यायति भिक्षुरेषः ।
सक्तः क्वचिन्नाहमिवैष नूनं शान्तस्तथा तृप्त इवोपविष्टः ॥२०॥
पुंस्कोकिलानामविचिन्त्य घोषं वसन्तलक्ष्म्यामविचार्य चक्षुः ।
शास्त्रं यथाभ्यस्यति चैष युक्तः शङ्के प्रियाकर्षति नास्य चेतः ॥२१॥
अस्मै नमोऽस्तु स्थिरनिश्चयाय निवृत्तकौतूहलविस्मयाय ।
शान्तात्मनेऽन्तर्गतमानसाय चङ्क्रम्यमाणाय निरुत्सुकाय ॥२२॥
निरीक्षमाणाय जलं सपद्मं वनं च फुल्लं परपुष्टजुष्टं ।
कस्यास्ति धैर्यं नवयौवनस्य मासे मधौ धर्मसपत्नभूते ॥२३॥
भावेन गर्वेण गतेन लक्ष्म्या स्मितेन कोपेन मदेन वाग्भिः ।
जह्रुः स्त्रियो देवनृपर्षिसंघान् कस्माद्धि नास्मद्विधमाक्षिपेयुः ॥२४॥

L has 16 a 1 17 b 7 (fol 12 a) 17 b 8 24 d 11

16 a तद्यसमोपियस्याय्र(? or म्र) P   17 b द्विगुरु° I   c °वस्थमुनभेत P   d P om क्र   18 c क्ष्तानृत° I   °न्नयीत्मा P   d कृतोसीति P   19 a यथैष्य° G   °काया I P   c पारिप्रवा° P   20 a वध्वासन I I   पादपनिर्झरस्थ I I C G c   21 b यथाप्त° I   d शके P   पेता P   22 a यस्मै P   b °कौतुहल° P   d चक्रम्यमाणाय L   चक्रम्यमाना P   23 a °मागस्य P   b वन P   पुन्न I P   पुप्त C   °जुस्त I   c धीर्यं L   धीर्यं I C   24 a गर्वेनगन P   c जहृ I I

कामाभिभूतो हि हिरण्यरेताः स्वाहां सिषेवे मघवानहल्यां ।
सत्त्वेन सर्गेण च तेन हीनः स्त्रीनिर्जितः किंवत मानुषोऽहं ॥२५॥
सूर्यः सरण्यूं प्रति जातरागस्तत्प्रीतये तष्ट इति श्रुतं नः ।
यामश्वभूतोऽश्ववधूं समेत्य यतोऽश्विनौ तौ जनयांबभूव ॥२६॥
स्त्रीकारणं वैरविषक्तबुद्ध्योर्वैवस्वताग्न्योश्चलितात्मधृत्योः ।
बहूनि वर्षाणि बभूव युद्धं कः स्त्रीनिमित्तं न चलेदिहान्यः ॥२७॥
भेजे श्वपाकीं मुनिरक्षमालां कामाद्वसिष्ठश्च स सद्वरिष्ठः ।
यस्यां विवस्वानिव भूजलादः सुतः प्रसूतोऽस्य कपिञ्जलादः ॥२८॥
पराशरः शापशरस्तथर्षिः कालीं सिषेवे झषगर्भयोनिं ।
सुतोऽस्य यस्यां सुषुवे महात्मा द्वैपायनो वेदविभागकर्ता ॥२९॥
द्वैपायनो धर्मपरायणश्च रेमे समं काशिषु वेश्यवध्वा ।
यया हतोऽभूच्चलनूपुरेण पादेन विद्युल्लतयेव मेघः ॥३०॥
तथाङ्गिरा रागपरीतचेताः सरस्वतीं ब्रह्मसुतः सिषेवे ।
सारस्वतो यत्र सुतोऽस्य जज्ञे नष्टस्य वेदस्य पुनःप्रवक्ता ॥३१॥
तथा नृपर्षेर्दिलिपस्य यज्ञे स्वर्गस्त्रियां काश्यप आगतास्यः ।
स्रुचं गृहीत्वा स्रवदात्मतेजश्चिक्षेप वह्नावसितो यतोऽभूत् ॥३२॥

I has 25 a 1–d 3 d 4–d 5 l, 26 a 11–b 1 p, b 2 b 3 d 4–d 10 p, d 11–27 c 4 c 5–c 8 p, c 9–c 11 f d 3–d 8 p d 9 d 10 d 11 f, 29 b 10–c 7, c 8–d 9 p, (fol 121) 32 a 1–a 10 l, a 11 b 5 f

25 a °रेता P c, सिस्विन P हीर LP, Cc 26 a स रभा प्रति PO, Hc a l, °रागस्ततमी° P and possibly L l, नष्ट P c, °वधु P 27 a °कारण P. a b °युद्धोवैपयस्ताग्योयलि° P c, यज़नि P. d स्त्रीमित्तमुचलेविहान्यः P 28 a, स्वपाकी P 29 a b, °स्तथापि काली P l, °योनि P c, यतोस्य LPC, Gc यस्या P 30 l सम P वेरमपर्या P 31 l, सरस्वतीब्रह्मसुतः P d नष्टस्य P. 32 a तथानृपे° P यज्ञे l P Cc c स्रुच P d, वह्निमसितो P

तथाङ्गदोऽन्तं तपसोऽपि गत्वा कामाभिभूतो यमुनामगच्छत् ।
धीमत्तरं यत्र रथीतरं स सारङ्गजुष्टं जनयांबभूव ॥३३॥
निशाम्य शान्तां नरदेवकन्यां वनेऽपि शान्तेऽपि च वर्तमानः ।
चचाल धैर्यान्मुनिरृश्यशृङ्गः शैलो महीकम्प इवोच्चशृङ्गः ॥३४॥
ब्रह्मर्षिभावार्थमपास्य राज्यं भेजे वनं यो विषयेष्वनास्थः ।
स गाधिजश्चापहृतो घृताच्या समा दशैकं दिवसं विवेद ॥३५॥
तथैव कन्दर्पशराभिमृष्टो रम्भां प्रति स्थूलशिरा मुमूर्छ ।
यः कामरोषात्मतयानपेक्षः शशाप तामप्रतिगृह्यमाणः ॥३६॥
प्रमद्वरायां च रुरुः प्रियायां भुजंगमेनापहृतेन्द्रियायां ।
संदृश्य संदृश्य जघान सर्पान्प्रियं न रोषेण तपो ररक्ष ॥३७॥
नप्ता शशाङ्कस्य यशोगुणाङ्को बुधस्य सूनुर्विबुधप्रभावः ।
तथोर्वशीमप्सरसं विचिन्त्य राजर्षिरुन्मादमगच्छदैडः ॥३८॥
रक्तो गिरेर्मूर्धनि मेनकायां कामात्मकत्वाच्च स तालजङ्घः ।
पादेन विश्वावसुना सरोषं वज्रेण हिन्ताल इवाभिजघ्ने ॥३९॥
नाशं गतायां परमाङ्गनायां गङ्गाजलेऽनङ्गपरीतचेताः ।
जह्नुश्च गङ्गां नृपतिर्भुजाभ्यां रुरोध मैनाक इवाचलेन्द्रः ॥४०॥

I bas 34 l 11-d 7 l 8-d 11 p 35 a 1 f a 8-a 9 f a 10 b 2 p 36 a 3-a 4 f c 11 p d 1 37 d 9 d 10 38 a 2 p b 4 1 l 5 b 8 p b 9 b 10 l 11-c 5 f l 9-d 11 f 39 a 1 40 l 11

33 a °न्ततपसो P 34 b P om घ c घधारधैर्यंमुनिरुध्यशृग P 35 d दशैक I, C c 36 l रम्भा I स्थुलशिरामुमुच्छ I c, °पेष LP d, °माण P 37 a प्रमन्वरायां LI II c c d सर्पांश्चिय IP सर्पांस्वीक II, सर्पान्दृष्ट S G and J c d तयोररक्ष P 38 a नक्ता I a l °गुणाकैर्बुधसमगु° P d °रुन्मादम° LP 39 a, गिरेमुर्धनि I c सरोप P 40 l °ज्ञमेन(मां then न)ग° L, °ज्ञमेनांग° I c गंगा I l रुरोधमेनामकरया° I

नृपश्च गङ्गाविरहाज्जुघूर्णे गङ्गाम्भसा साल इवात्तमूलः।
कुलप्रदीपः प्रतिपस्य सूनुः श्रीमत्तनुः शन्तनुरस्वतन्त्रः ॥४१॥
हृतां च सौनन्दकिनानुशोचन्प्राप्तामिवोर्वीं स्त्रियमुर्वशीं तां।
सद्वृत्तवर्मा किल सोमवर्मा बभ्राम चित्तोद्भवभिन्नवर्मा ॥४२॥
भार्यां मृतां चानुममार राजा भीमप्रभावो भुवि भीमकः सः।
बलेन सेनाक इति प्रकाशः सेनापतिर्देव इवात्तसेनः ॥४३॥
स्वर्गं गते भर्तरि शन्तनौ च कालीं जिहीर्षन् जनमेजयः सः।
अवाप भीष्मात्समवेत्य मृत्युं न तद्गतं मन्मथमुत्ससर्ज ॥४४॥
शप्तश्च पाण्डुर्मदनेन नूनं स्त्रीसंगमे मृत्युमवाप्स्यसीति।
जगाम माद्रीं न महर्षिशापाद्सेव्यसेवी विममर्श मृत्युं ॥४५॥
एवंविधा देवनृपर्षिसङ्घाः स्त्रीणां वशं कामवशेन जग्मुः।
धिया च सारेण च दुर्बलः सन्प्रियामपश्यन् किमु विक्लवोऽहं ॥४६॥
यास्यामि तस्माद्गृहमेव भूयः कामं करिष्ये विधिवत्सकामं।
न ह्यन्यचित्तस्य चलेन्द्रियस्य लिङ्गं क्षमं धर्मपथाच्युतस्य ॥४७॥

पाणौ कपालमवधाय विधाय मौण्ड्यं
मानं निधाय विकृतं परिधाय वासः।
यस्योद्भवो न धृतिरस्ति न शान्तिरस्ति
चित्रप्रदीप इव सोऽस्ति च नास्ति चैव ॥४८॥.

L has 41 a 1–46 c 1, (fol 13 a) 46 c 2–48 d 14

41 a मु(?)पद्य P °ज्जघुर्णं P b, °मुलः P. c d, सूनुश्रीमत्तनु LP d, शान्तनु° P
42 b, माप्तामिधाङ्क्षी P °र्वशीता P c and d, P has °धर्मा for °वर्मा. d, °भिन्नमर्मा H.
43 a, भार्य्यामृता P चानुममार L c, P om न. d, इवार्त्तु(?)सेनः P. 44 a, शा-
न्तनौ I C b, कालोजिहीर्षन् P c °त्समवेत्य L भीष्मासमवेन्य P. d, तद्धत P
45 d, °द्सेव्यमेतद्वि° I PC. 46 b, स्त्रीणा P P om न c, धियाच P. c d, सप्रि(?)-
या° L, स प्रिया° I C, G c 47 d लिगा P °पथाच्युतस्य P 48 a, °मवधार्य्य P.
b, वि(rewritten)धाय P c, यस्यामध्वा P d, °प्रदीप्तवसेस्ति P

यो निःसृतश्च न च निःसृतकामरागः
काषायमुद्वहति यो न च निष्कषायः ।
पात्रं बिभर्ति च गुणैर्न च पात्रभूतो
लिङ्गं वहन्नपि स नैव गृही न भिक्षुः ॥४९॥

न न्याय्यमन्वयवतः परिगृह्य लिङ्गं
भूयो विमोक्तुमिति योऽपि हि मे विचारः ।
सोऽपि प्रणश्यति विचिन्त्य नृपप्रवीरां-
स्तान्ये तपोवनमपास्य गृहाण्यतीयुः ॥५०॥

शाल्वाधिपो हि ससुतोऽपि तथाम्बरीषो
रामोऽन्ध एव स च सांकृतिरन्तिदेवः ।
चीराण्यपास्य दधिरे पुनरंशुकानि
छित्त्वा जटाश्च कुटिला मुकुटानि बभ्रुः ॥५१॥

तस्माद्भिक्षार्थं मम गुरुरितो यावदेव प्रयात-
स्त्यक्त्वा काषायं गृहमहमितस्तावदेव प्रयास्ये ।
पूज्यं लिङ्गं हि स्खलितमनसो बिभ्रतः क्लिष्टबुद्धे-
र्नामुत्रार्थः स्यादुपहतमतेर्नाप्ययं जीवलोकः ॥५२॥

सौन्दरनन्दे महाकाव्ये नन्दविलापो नाम सप्तमः सर्गः ।

*L bas 49 a 1 52 d 13, d 14–d 18 P, col., 1–7, 8–end P.*

49 a, निसृतश्च P. निसृतकाम॰ L. d, समिगृहीमिभिक्षुः P. 50 a, नन्यार्य्यम॰ P. d, तपोपनम॰ P. ॰ण्यमीयुः H. and S. 51 a, साल्वाधिपो LP. b, रामोन्ध(?) LC, रामोस्य P. c, ॰ण्यपाद्य P. 52 b, काया(?)यं P. c, पुन्यं P स्ख(?)रित॰ P. d, ॰र्नाप्यंजीव॰ P. col., इतिसौन्दरा॰ P, which adds काव्यात्यादपोपहतो after ॰काव्ये.

## CANTO VIII

अथ नन्दमधीरलोचनं गृहयानोत्सुकमुत्सुकोत्सुकं ।
अभिगम्य शिवेन चक्षुषा श्रमणः कश्चिदुवाच मैत्रया ॥१॥
किमिदं मुखमश्रुदुर्दिनं हृदयस्थं विवृणोति ते तमः ।
धृतिमेहि नियच्छ विक्रियां न हि बाष्पश्च शमश्च शोभते ॥२॥
द्विविधा समुदेति वेदना नियतं चेतसि देह एव च ।
श्रुतविध्युपचारकोविदा द्विविधा एव तयोश्चिकित्सकाः ॥३॥
तदियं यदि कायिकी रुजा भिषजे तूर्णमनूनमुच्यतां ।
विनिगुह्य हि रोगमातुरो नचिरात्तीव्रमनर्थमृच्छति ॥४॥
अथ दुःखमिदं मनोमयं वद वक्ष्यामि यदत्र भेषजं ।
मनसो हि रजस्तमस्विनो भिषजोऽध्यात्मविदः परीक्षकाः ॥५॥
निखिलेन च सत्यमुच्यतां यदि वाच्यं मयि सौम्य मन्यसे ।
गतयो विविधा हि चेतसां बहुगुह्यानि मदाकुलानि च ॥६॥
इति तेन स चोदितस्तदा व्यवसायं प्रविवक्षुरात्मनः ।
अवलम्ब्य करे करेण तं प्रविवेशान्यतरद्वनान्तरं ॥७॥

L has 1 a 1–a 7 f, a 8–b 1 j, b 2–b 7, b 8–b 11 p, c 1–c 2 f, d 1–d 2 f, d 3–d 6 p, d 7–2 b 8, b 9–c 4 p, c 5–c 9 f, 3 d 8–d 10 p, 4 d 1–d 7.

1 d, मैषयः P. 2 b, षमः P, भ्रमः C. c, धृतिमेहिमिच्छ P. 3 c, P om. र. 4 b, मु(or तु)र्णमनु (or तु)ममुच्यतां P; J c d, नचिरात्तिव्रमनर्थमिच्छति P. 5 cd, रज-स्तमसस्वभिषजोध्यात्मविदः P 6 d, P om. गु. C c. महागुह्यानि PC. 7 a, चोदितः P, बोधितः C b, प्रविवक्षुर॰ P c, करेणकरेण P; H c. d, प्रविवेशा-न्यतराद्व॰ P; C c

अथ तत्र शुचौ लतागृहे कुसुमोद्गारिणि तौ निषेदतुः ।
मृदुभिर्मृदुमारुतेरितैरुपगूढाविव बालपल्लवैः ॥८॥
स जगाद ततश्चिकीर्षितं घननिश्वासगृहीतमन्तरा ।
श्रुतवाग्विशदाय भिक्षवे विदुषा प्रव्रजितेन दुर्वचं ॥९॥
सदृशं यदि धर्मचारिणः सततं प्राणिषु मैत्रचेतसः ।
अधृतौ यदियं हितैषिता मयि ते स्यात्करुणात्मनः सतः ॥१०॥
अत एव च मे विशेषतः प्रविवक्षा क्षमवादिनि त्वयि ।
न हि भावमिमं चलात्मने कथयेयं ब्रुवतेऽप्यसाधवे ॥११॥
तदिदं शृणु मे समासतो न रमे धर्मविधावृते प्रियां ।
गिरिसानुषु कामिनीमृते कृतरेता इव किंनरश्चरन् ॥१२॥
वनवाससुखात्पराङ्मुखः प्रययासा गृहमेव येन मे ।
न हि शर्म लभे तया विना नृपतिर्हीन इवोत्तमश्रिया ॥१३॥
अथ तस्य निशम्य तद्वचः प्रियभार्याभिमुखस्य शोचतः ।
श्रमणः स शिरः प्रकम्पयन्निजगादात्मगतं शनैरिदं ॥१४॥
कृपणं बत यूथलालसो महतो व्याधभयाद्विनिःसृतः ।
प्रविविक्षति वागुरां मृगश्चपलो गीतरवेण वञ्चितः ॥१५॥
विहगः खलु जालसंवृतो हितकामेन जनेन मोक्षितः ।
विचरन्फलपुष्पवद्वनं प्रविविक्षुः स्वयमेव पञ्जरं ॥१६॥

L has (fol 13 b) 10 b 6–b 7, b 8–c 7 p, c 8–d 3 f, 12 a 4–a 5 f, d 8–d 11 p, 13 a 1–c 5, c 6–d 1 p, d 2–d 9, d 10–14 b 3 p, b 4 f, b 9–d 5 f, 15 a 8–b 3 f, b 4–16 d 11

8 a, शु(?)चौ P. d, °गूढाविपाल° P 9 b, °गृहित° P. c, °वाग्भि(?)सदाय P. 10 a, सदृशं P. b, प्राणिष(?) P c, अधृतौ P d, मयिते P. 11 a, विश्च(?)षतः P, b, क्षयवादिनि P; H.c. 12 a, शृणुमेसतासतो P. 13 c, विना P d, इवोर्त्तम° P. 14 b, सोचतः P. c, श्रमनः P. 15 a, युथलालसो P b, °द्विनिष्कृतः P, c, मृगाश्च° P. 16 a, विहंगः P जालं P b, LP om मो and L has it added on margin.

कलभः करिणा खलूद्धृतो बहुपङ्काद्विषमान्नदीतलात् ।
जलतर्षवशेन तां पुनः सरितं ग्राहवतीं तितीर्षति ॥१७॥
शरणे सभुजंगमे स्वपन्प्रतिबुद्धेन परेण बोधितः ।
तरुणः खलु जातविभ्रमः स्वयमुग्रं भुजगं जिघृक्षति ॥१८॥
महता खलु जातवेदसा ज्वलितादुत्पतितो वनद्रुमात् ।
पुनरिच्छति नीडतृष्णया पतितुं तत्र गतव्यथो द्विजः ॥१९॥
अवशः खलु काममूर्छया प्रियया श्येनभयाद्विनाकृतः ।
न धृतिं समुपैति न ह्रियं करुणं जीवति जीवजीवकः ॥२०॥
अकृतात्मतया तृषान्वितो घृणया चैव धिया च वर्जितः ।
अशनं खलु वान्तमात्मना कृपणः श्वा पुनरत्तुमिच्छति ॥२१॥
इति मन्मथशोककर्षितं तमनुध्याय मुहुर्निरीक्ष्य च ।
श्रमणः स हिताभिकाङ्क्षया गुणवद्वाक्यमुवाच विप्रियं ॥२२॥
अविचारयतः शुभाशुभं विषयेष्वेव निविष्टचेतसः ।
उपपन्नमलब्धचक्षुषो न रतिः श्रेयसि चेद्भवेत्तव ॥२३॥
श्रवणे ग्रहणेऽथ धारणे परमार्थावगमे मनःशमे ।
अविपक्कमतेश्चलात्मनो न हि धर्मेऽभिरतिर्विधीयते ॥२४॥

L has 17 a 1–23 c 5, (fol 14 a) 23 c 6–24 d 11

17 a, घृणुद्धृतो P b, •म्नदीतरात् P. d, सरितग्राह्व• P, र्योह्व• L 18 a, सरणिसस्मुजंगमिस्वपत्न• P b, पुरेण P c, •विभ्रम LP. d, स्वयमुग्रं P विघुषति P. 19 a, महतात्माखलु P d, गतोव्यथो P. 20 a, •मुर्च्छया P. b, P om. प्रिय d, LP om जीव before जीवकः, L having it on margin in later hand जीवक P. 21 a, अकृतात्म• P d, कृपण L, कृपणांश्वा P 22 a, मन्मथो LP, corrected to थ in L. c, श्रमनः P 23 b, निपिष्टचेतसः P. d, चेद्भवेत्तव P 24 a, श्रवणेग्रहणे P. b, मनःसमे c, •लात्मनो LP d, विधीयति P

विषयेषु तु दोषदर्शिनः परितुष्टस्य शुचेरमानिनः ।
शमकर्मसु युक्तचेतसः कृतबुद्धेर्न रतिर्न विद्यते ॥२५॥
रमते तृषितो धनश्रिया रमते कामसुखेन बालिशः ।
रमते प्रशमेन सज्जनः परिभोगान्परिभूय विद्यया ॥२६॥
अपि च प्रथितस्य धीमतः कुलजस्यार्चितलिङ्गधारिणः ।
सदृशी न गृहाय चेतना प्रणतिर्वायुवशाद्गिरेरिव ॥२७॥
स्पृहयेत्परसंश्रिताय यः परिभूयात्मवशां स्वतन्त्रतां ।
उपशान्तिपथे शिवे स्थितः स्पृहयेद्दोषवते गृहाय सः ॥२८॥
व्यसनाभिहतो यथा विशेत्परिमुक्तः पुनरेव बन्धनं ।
समुपेत्य वनं तथा पुनर्गृहसंज्ञं मृगयेत बन्धनं ॥२९॥
पुरुषश्च विहाय यः कलिं पुनरिच्छेत्कलिमेव सेवितुं ।
स विहाय भजेत बालिशः कलिभूतामजितेन्द्रियः प्रियां ॥३०॥
सविषा इव संश्रिता लताः परिमृष्टा इव सोरगा गुहाः ।
विवृता इव चासयो धृता व्यसनान्ता हि भवन्ति योषितः ॥३१॥
प्रमदाः समदा मदप्रदाः प्रमदा वीतमदा भयप्रदाः ।
इति दोषभयावहाश्च ताः कथमर्हन्ति निषेवनं नु ताः ॥३२॥
स्वजनः स्वजनेन भिद्यते सुहृदश्चापि सुहृज्जनेन यत् ।
परदोषविचक्षणाः शठास्तदनार्याः प्रचरन्ति योषितः ॥३३॥

L has 25 a 1 32 d 9 d 10-d 11 p, 33 a 1-b 4 f, c 8-c 10 p d 1-d 3

25 c, समकर्मयुक्त॰ P  d L om रतिर्न and has रतम on margin in later hand, रतिसमिर्न्ते P, G,c  26 a धनप्रिया P.  b P om तै  c सर्ज्जन॰ P  d ॰भोगात्परि॰ P  28 b परिमुयात्मवसा I  c उपसान्ति॰ P  29 c, P om पे  d, मृगयेन(?) L, ॰सद्ममृगयेत I  30 a कलि P  d प्रिय I P, स्त्रिय C  31 c, चासयोवृता P  32 a समुदा P  c या G  d कथमर्हन्ति P  ता P  33 b यत P  cd ॰पायदासदानार्यं P ॰पाशठास्त॰ I  d I om न्ति

कुलजाः कृपणीभवन्ति यद्यदयुक्तं प्रचरन्ति साहसं ।
प्रविशन्ति च यच्चमूमुखं रभसास्तच्च निमित्तमङ्गनाः ॥३४॥
वचनेन हरन्ति वल्गुना निशितेन प्रहरन्ति चेतसा ।
मधु तिष्ठति वाचि योषितां हृदये हालहलं महद्विषं ॥३५॥
प्रदहन्दहनोऽपि गृह्यते विशरीरः पवनोऽपि गृह्यते ।
कुपितो भुजगोऽपि गृह्यते प्रमदानां तु मनो न गृह्यते ॥३६॥
न वपुर्विमृशन्ति न श्रियं न मतिं नापि कुलं न विक्रमं ।
प्रहरन्त्यविशेषतः स्त्रियः सरितो ग्राहकुलाकुला इव ॥३७॥
न वचो मधुरं न लालनं स्मरति स्त्री न च सौहृदं क्वचित् ।
कलिता वनितैव चञ्चला तदिहारिष्विव नावलम्ब्यते ॥३८॥
अददत्सु भवन्ति नर्मदाः प्रददत्सु प्रविशन्ति विभ्रमं ।
प्रणतेषु भवन्ति गर्विताः प्रमदास्तृप्ततराश्च मानिषु ॥३९॥
गुणवत्सु चरन्ति भर्तृवद्गुणहीनेषु चरन्ति पुत्रवत् ।
धनवत्सु चरन्ति तृष्णया धनहीनेषु चरन्त्यवज्ञया ॥४०॥
विषयाद्विषयान्तरं गता प्रचरत्येव यथा हृतापि गौः ।
अनवेक्षितपूर्वसौहृदा रमतेऽन्यत्र गता तथाङ्गना ॥४१॥

L has 34 b 1–b 3 p, b 4–35 a 5, a 6–a 9 p, a 10 b 1 f, b 11–c 3 f, 37 a 4–a 8 f, a 9 p a 10 b 3 f b 4 b 11 c 1–c 4 p, c 5–c 10 f, (fol 14 b) 40 a 1–a 6 a 7–b 3 p, b 4–b 10 f

34 a, कुराजात्मपणी॰ I, सुजभाः C, H c   35 a and b, P om र.   a, वर्णना PC, पल्गुना H S. Gu and app. I   d, हराहलमहद्विष P   37 a, पियं P   b, नापिकुलमपि॰ P   c ॰शेषत P   d, P om इ, C c   38 a, मराद्रुन P, C c   b, स्त्री P. P om च, C c   P om क्वचित्, H c   c च (or न) सितावनितेव P.   d, तदिदरेंह्रि- (? or ष्पि) वमावंध्य (? ध्य ?) ते P   39 c, भवति P   d, ॰दातृप्त॰ P   40 a, गुणवत्स P. मतृवद्॰ P.   b मुतवत् P for L see notes प्रभुवत् C   41 b, हतापि C, वनेऽपि G   c ॰पुर्व॰ P   तथागमा P

प्रविशन्त्यपि हि स्त्रियश्चितामनुबध्नन्त्यपि मुक्तजीविताः ।
अपि बिभ्रति नैव यन्त्रणा न तु भावेन वहन्ति सौहृदं ॥४२॥

रमयन्ति पतीन् कथंचन प्रमदा याः पतिदेवताः क्वचित् ।
चलचित्ततया सहस्रशो रमयन्ते हृदयं स्वमेव ताः ॥४३॥

श्वपचं किल सेनजित्सुता चकमे मीनरिपुं कुमुद्वती ।
मृगराजमथो बृहद्रथा प्रमदानामगतिर्न विद्यते ॥४४॥

कुरुहैहयवृष्णिवंशजा बहुमायाकवचोऽथ शम्बरः ।
मुनिरुग्रतपाश्च गौतमः समवापुर्वनितोद्धतं रजः ॥४५॥

अकृतज्ञमनार्यमस्थिरं वनितानामिदमीदृशं मनः ।
कथमर्हति तासु पण्डितो हृदयं सञ्जयितुं चलात्मसु ॥४६॥

अथ सूक्ष्ममतिद्वयाशिवं लघु तासां हृदयं न पश्यसि ।
किमु कायमसद्गृहं स्रवद्वनितानामशुचिं न पश्यसि ॥४७॥

यदहन्यहनि प्रधावनैर्वसनैश्चाभरणैश्च संस्कृतं ।
अशुभं तमसावृतेक्षणः शुभतो गच्छसि नावगच्छसि ॥४८॥

L has 42 d 5–43 b 5, b 6–b 11 l, c 7–d 3 f, 45 b 9–c 6 f, c 7–46 c 8, c 9–d 11 l, 47 a 1–a 3 f, a 9–a 10 f, b 1–b 9 p b 10–b 11, d 7–d 11 f, 48 a 1–d 11.

42 a, मविशत्यपि P b, °मवधन्त्यपि P, C c °जीवितान् G c, चैव G. d, सौहृदं P 43 a, रमयन्तियन्तिनकथं° P d, हृदयं P ता P. 44 a, श्वपंच P. सेजिसुता P. c, प्रमदानाघगन्तिन्न P, which om ते 45 a, °हृहय° P. c, मुनिमु- (or स)संतपाच P. गोतमः LP. d, °तोद्गत P 46 a, अक्षतद्रुम° P. b, P om. दमी. d, संजयिति P 47 a, सुक्ष्ममतीद्वयाधधृक् P, for L see notes तासा P; H, S and G.c. पश्यति P d, °तानाप्रतनपश्यसि P, for I see notes 48 a प्रसा- धनै° G b, °यासरणैयमस्कृत P c °षण LP.

अथवा समवैषि तत्तनूमशुभां त्वं न तु संविदस्ति ते ।
सुरभिं विदधासि हि क्रियामशुचेस्तत्प्रभवस्य शान्तये ॥४९॥

अनुलेपनमञ्जनं स्रजो मणिमुक्तातपनीयमंशुकं ।
यदि साधु किमत्र योषितां सहजं तासु विचीयतां शुचि ॥५०॥

मलपङ्कधरा दिगम्बरा प्रकृतिस्थैर्नखदन्तरोमभिः ।
यदि सा तव सुन्दरी भवेन्नियतं तेऽद्य न सुन्दरी भवेत् ॥५१॥

स्रवतीमशुचिं स्पृशेच्च कः सघृणो जर्जरभाण्डवत्स्त्रियं ।
यदि केवलया त्वचावृता न भवेन्मक्षिकपत्त्रमात्रया ॥५२॥

त्वचवेष्टितमस्थिपञ्जरं यदि कायं समवैषि योषितां ।
मदनेन च कृष्यसे बलादघृणः खल्वधृतिश्च मन्मथः ॥५३॥

शुभतामशुभेषु कल्पयन्नखदन्तत्वचकेशरोमसु ।
अविचक्षण किं न पश्यसि प्रकृतिं च प्रभवं च योषितां ॥५४॥

तदवेत्य मनःशरीरयोर्वनिता दोषवतीर्विशेषतः ।
चपलं भवनोत्सुकं मनः प्रतिसंख्यानबलेन वार्यतां ॥५५॥

श्रुतवान्मतिमान् कुलोन्नतः परमस्य प्रशमस्य भाजनं ।
उपगम्य यथातथा पुनर्न हि भेत्तुं नियमं त्वमर्हसि ॥५६॥

L has 49 a 1–56 c 6 (fol 15 a) 56 c 7–d 11

49 a तत्तगुस° LP c, विद्धाति P d °शुभस्त° P 50 d विचीयता P 51 a °पङ्कअधरा P cd भवेन्नियत P 52 a स्रवतिम° P स्पृशेच P. d भवेन्मक्षि° P which om पत्त्र 53 d खल्वधृ° L मन्मथ LP 54 c, अविचक्षण P d प्रभव P 55 c, भवतोत्सुक PC 56 c यथातथापुनर्न P (perhaps अ originally in L and corrected)

अभिजनमहतो मनस्विनः प्रिययशसो बहुमानमिच्छतः ।
निधनमपि वरं स्थिरात्मनश्च्युतविनयस्य न चैव जीवितं ॥५७॥

बद्धा यथा हि कवचं प्रगृहीतचापो
निन्द्यो भवत्यपसृतः समराद्रथस्थः ।
भैक्षाकमभ्युपगतः परिगृह्य लिङ्गं
निन्द्यस्तथा भवति कामहृतेन्द्रियाश्वः ॥५८॥

हास्यो यथा च परमाभरणाम्बरस्रग्
भैक्षं चरन्धृतधनुश्चलचित्रमौलिः ।
वैरूप्यमभ्युपगतः परपिण्डभोजी
हास्यस्तथा गृहसुखाभिमुखः सतृष्णः ॥५९॥

यथा स्वन्नं भुक्त्वा परमशयनीयेऽपि शयितो
वराहो निर्मुक्तः पुनरशुचि धावेत्परिचितं ।
तथा श्रेयः शृण्वन्प्रशमसुखमास्वाद्य गुणवद्
वनं शान्तं हित्वा गृहमभिलषेत्कामतृषितः ॥६०॥

यथोल्का हस्तस्था दहति पवनप्रेरितशिखा
यथा पादाक्रान्तो दशति भुजगः क्रोधरभसः ।
यथा हन्ति व्याघ्रः शिशुरपि गृहीतो गृहगतः
तथा स्त्रीसंसर्गो बहुविधमनर्थाय भवति ॥६१॥

I. has all.

57 a, मनस्वि(स्वि)नः L. मनस्विनः P. c, P. om म d, °च्युत° P. सदैव P.
58 b, मपसृतमसृतः P. 59 c, °भ्युगतः P. d, °सुखाभिमुखः P. 60 a, स्वर्चं P.
°शयनीयपि P. c, श्रियः P. °सुखाम° P. c d, गुणवम्बन L. गुणवम्बनं P. d, °मभिलषेत्-
काम° L. °भिरतामकातृषितः P. 61 b, भुजग°(ग°) L. भुजग° P. d, P. om ५

तद्विज्ञाय मनःशरीरनियतान्नारीषु दोषानिमान्
मत्वा कामसुखं नदीजलचलं क्लेशाय शोकाय च ।
दृष्ट्वा दुर्बलमामपात्रसदृशं मृत्यूपसृष्टं जगन्
निर्मोक्षाय कुरुष्व बुद्धिमतुलामुत्कण्ठितुं नार्हसि ॥६२॥

सौन्दरनन्दे महाकाव्ये स्त्रीविघातो नामाष्टमः सर्गः ।

L has all

62 c दृस्त्वा P °मानपाच° I मृत्युपभृष्टअगत् P d निर्म्मोंक्षोय P col इति श्रीसौन्दरा° P °काव्येआर्य्याश्वघोषकृतौस्त्री° P

## CANTO IX

अथैवमुक्तोऽपि स तेन भिक्षुणा जगाम नैवोपशमं प्रियां प्रति ।
तथा हि तामेव तदा स चिन्तयन्न तस्य शुश्राव विसंज्ञवद्वचः ॥१॥
यथा हि वैद्यस्य चिकीर्षतः शिवं वचो न गृह्णाति मुमूर्षुरातुरः ।
तथैव मत्तो बलरूपयौवनैर्हितं न जग्राह स तस्य तद्वचः ॥२॥
न चात्र चित्रं यदि रागपाप्मना मनोऽभिभूयेत तमोवृतात्मनः ।
नरस्य पाप्मा हि तदा निवर्तते यदा भवत्यन्तगतं तमस्तनु ॥३॥
ततस्तथाक्षिप्तमवेक्ष्य तं तदा बलेन रूपेण च यौवनेन च ।
गृहप्रयाणं प्रति च व्यवस्थितं शशास नन्दं श्रमणः स शान्तये ॥४॥
बलं च रूपं च नवं च यौवनं तथावगच्छामि यथावगच्छसि ।
अहं त्विदं ते त्रयमव्यवस्थितं यथावबुद्धो न तथावबुध्यसे ॥५॥
इदं हि रोगायतनं जरावशं नदीतटानोकहवच्चलाचलं ।
न वेत्सि देहं जलफेनदुर्बलं बलस्थतामात्मनि येन मन्यसे ॥६॥
यदान्नपानासनयानकर्मणामसेवनादप्यतिसेवनादपि ।
शरीरमासन्नविपत्ति दृश्यते बलेऽभिमानस्तव केन हेतुना ॥७॥

L has 1 a 1-b 1, b 2-b 9 p, b 10-c 10, c 11-c 12 p, d 1-d 7 f, 2 a 2-a 4 f, a 5-a 10 p, a 11-d 8, d 9-d 10 p, 3 a 8-a 12 p, d 11 4 a 2 f, c 11-c 12 f, d 1-d 4 p, d 5-d 7 f, d 8-d 12, 5 a 1 a 5 f, (fol 15 b) 7 b 10-c 4 f

1 d, पिसंघाषाम्धव: P; H c    2 a, चिकीर्षत I P    b, गृह्णातिमुमुपुरात्मरः P.
3 b, °भिभूयेत् P.    d, तमुस्तनु P.    4 b, रूपेन P    c, °प्रयाण P    d, श्रवण: P.
5 c, त्विदं P.    d, तथावबुध्यसे P; G c.    6 a, इमं G    जरा(m)वश P    b नदीत-टीनोकह° P, H c    c मवेत्स P    7 b °सेवनादप्यति° P    c दृश्यते P

हिमातपव्याधिजराक्षुदादिभिर्यदाप्यनर्थैरुपमीयते जगत्।
जलं शुचौ मास इवार्करश्मिभिः क्षयं व्रजन् किं बलदृप्त मन्यसे ॥८॥

त्वगस्थिमांसक्षतजात्मकं यदा शरीरमाहारवशेन तिष्ठति।
अजस्रमार्तं सततप्रतिक्रियं बलान्वितोऽस्मीति कथं विहन्यसे ॥९॥

यथा घटं मृन्मयमाममाश्रितो नरस्तितीर्षेत्क्षुभितं महार्णवं।
समुच्छ्रयं तद्वदसारमुद्वहन्बलं व्यवस्येद्विषयार्थमुद्यतः ॥१०॥

शरीरमामादपि मृन्मयाद्घटा-
दिदं तु निःसारतमं मतं मम।
चिरं हि तिष्ठेद्विधिवद्धृतो घटः
समुच्छ्रयोऽयं सुधृतोऽपि भिद्यते ॥११॥

यदाम्बुभूवाय्वनलाश्च धातवः सदा विरुद्धा विषमा इवोरगाः।
भवन्त्यनर्थाय शरीरमाश्रिताः कथं बलं रोगविधो व्यवस्यसि ॥१२॥

प्रयान्ति मन्त्रैः प्रशमं भुजंगमा न मन्त्रसाध्यास्तु भवन्ति धातवः।
क्वचिच्च कंचिच्च दशन्ति पन्नगाः सदा च सर्वं च तुदन्ति धातवः ॥१३॥

इदं हि शय्यासनपानभोजनैर्गुणैः शरीरं चिरमप्यवेक्षितं।
न मर्षयत्येकमपि व्यतिक्रमं यतो महाशीविषवत्प्रकुप्यति ॥१४॥

*L* has 9 d 11–10 b 2 b 3 b 7 *f*, c 10–d 2 *f*, 12 b 1–b 8 *f*, l 12 13 a 1, a 2 a 5 p a 6–a 11 a 12–c 2 ], c 3–c 6 c 7–c 9 p d 2 d 3 f d 4–d 11 p, d 12–14 a 4 b 9–c 1 c 2–c 5 p, c 6–d 12

8 a °ज्ला° P l °नधिकपमीयते P, °रुपपीड्यते H G c d, प्रजेत्विं P, ˚c 9 b, °वसेन P d हि मन्यसे G 10 a, मृत्मय° P cd, °हत्पम P 11 a, मृन्म-याघ° P c, P om टः, C c 12 l सदाम्बु P, S and G c d, रोगविधौ C 13 b, °साध्योस्तु P धावत. I, धावते° P c केचिचक्वचिच P and probably L, कदापि G दृशन्ति P 14 a, प्रयां° P c, °त्येकपिपि L with mark on first पि to show reference to lost marg n d यतोमहाही° P

यदा हिमार्तो ज्वलनं निषेवते
हिमं निदाघाभिहतोऽभिकाङ्क्षति ।
क्षुधान्वितोऽन्नं सलिलं तृषान्वितो
बलं कुतः किं च कथं च कस्य च ॥१५॥

तदेवमाज्ञाय शरीरमातुरं बलान्वितोऽस्मीति न मन्तुमर्हसि ।
असारमस्वन्तमनिश्चितं जगज्जगत्यनित्ये बलमव्यवस्थितं ॥१६॥

क्व कार्तवीर्यस्य बलाभिमानिनः सहस्रबाहोर्बलमर्जुनस्य तत् ।
चकर्त बाहून्युधि यस्य भार्गवो महान्ति शृङ्गाण्यशनिर्गिरेरिव ॥१७॥

क्व तद्बलं कंसविकर्षिणो हरेस्तुरङ्गराजस्य पुटावभेदिनः ।
यमेकबाणेन निजघ्निवान् जराः क्रमागता रूपमिवोत्तमं जरा ॥१८॥

दितेः सुतस्यामररोषकारिणश्चमूरुचेर्वा नमुचेः क्व तद्बलं ।
यमाहवे क्रुद्धमिवान्तकं स्थितं जघान फेनावयवेन वासवः ॥१९॥

बलं कुरूणां क्व च तत्तदाभवद्
युधि ज्वलित्वा तरसौजसा च ये ।
समित्समिद्धा ज्वलना इवाध्वरे
हतासवो भस्मनि पर्यवस्थिताः ॥२०॥

अतो विदित्वा बलवीर्यमानिनां बलान्वितानामवमर्दितं बलं ।
जगज्जरामृत्युवशं विचारयन्बलेऽभिमानं न विधातुमर्हसि ॥२१॥

L has all

15 d, कुटः P  16 c •मस्वान्तम• S.  17 b •बाहोबल• P  c, बाजन्युधि P. d, शृंगाण्यशनिगि• P  18 a क्वतद्बर P  a b, हरेस्तरग• P  b, पुढ़ि(?)व• P. c, निबधिंवान् P  चरा LP  d, क्रमामता P  19 a, दिते LP  b, •चमुरुचेर्वा-नमुचेः P  c, यमाहवेन् P  d, हेनाव• P  20 a भवदा• P  b, युधि P. 21 a, बलविर्य• LP.  c, •मृत्युवशं P  d •न्यसि L, •न्परे P  Ce  •महसि L.

वलं महद्वा यदि वा न मन्यसे कुरुष्व युद्धं सह तावदिन्द्रियैः ।
जयश्च तेऽचास्ति महच्च ते वलं पराजयश्चेद्वितथं च ते वलं ॥२२॥

तथा हि वीराः पुरुषा न ते मता
जयन्ति ये साश्वरथद्विपानरीन् ।
यथा मता वीरतरा मनीषिणो
जयन्ति लोलानि षडिन्द्रियाणि ये ॥२३॥

अहं वपुष्मानिति यच्च मन्यसे विचक्षणं नैतदिदं च गृह्यतां ।
क्व तद्वपुः सा च वपुष्मती तनुर्गदस्य साम्बस्य च सारणस्य च ॥२४॥
यथा मयूरश्चलचित्रचन्द्रको विभर्ति रूपं गुणवत्स्वभावतः ।
शरीरसंस्कारगुणादृते तथा विभर्षि रूपं यदि रूपवानसि ॥२५॥
यदि प्रतीपं वृणुयान्न वाससा न शौचकाले यदि संस्पृशेदपः ।
मृजाविशेषं यदि नाददीत वा वपुर्वपुष्मन्वद कीदृशं भवेत् ॥२६॥
नवं वयश्चात्मगतं निशाम्य यद्गृहोन्मुखं ते विषयाप्तये मनः ।
नियच्छ तच्छैलनदीरयोपमं द्रुतं हि गच्छत्यनिवर्ति यौवनं ॥२७॥
ऋतुर्व्यतीतः परिवर्तते पुनः क्षयं प्रयातः पुनरेति चन्द्रमाः ।
गतं गतं नैव तु संनिवर्तते जलं नदीनां च नृणां च यौवनं ॥२८॥
विवर्णितश्मश्रु वलीविकुञ्चितं विशीर्णदन्तं शिथिलभ्रु निष्प्रभं ।
यदा मुखं द्रक्ष्यसि जर्जरं तदा जराभिभूतो विमदो भविष्यसि ॥२९॥

I has (fol 16a) 22a 1 23c 11 c 12–d 4 p, d 5 29 1 12

22a यदियेन I P यदि ते च G  1 पुन्यं(?) L  c तेतास्ति I  d °अयधिदि° I P
23a, प्र(?)चया I  ममा I  1 °द्विपानराम् I  c ममा I  मनीपीणो I  d L om
दि, षडेन्द्रि° I  24 1 °ैतदिद P  d साम्यष P  25c °गुणादृतो (वृते) L
26a, पृणया° I  b सौचकाले I  d वपूर्वपु° I  कीदृम P  27ab निशाम्यपगृ° I
c नधेनदी° I  °रयोयम I  1 गच्छत्यनि° I  29 1 P om नि  c द्रक्षमि I

निषेव्य पानं मदनीयमुत्तमं निशाविवासेषु चिराद्विमाद्यति ।
नरस्तु मत्तो बलरूपयौवनैर्न कश्चिदप्राप्य जरां विमाद्यति ॥३०॥
यथेक्षुरत्यन्तरसप्रपीडितो भुवि प्रविद्धो दहनाय शुष्यते ।
तथा जरायन्त्रनिपीडिता तनुर्निपीतसारा मरणाय तिष्ठति ॥३१॥
यथा हि नृभ्यां करपत्रमीरितं समुच्छ्रितं दारु भिनत्त्यनेकधा ।
तथोच्छ्रितां पातयति प्रजामिमामहर्निशाभ्यामुपसंहिता जरा ॥३२॥

स्मृतेः प्रमोषो वपुषः पराभवो
रतेः क्षयो वाच्छ्रुतिचक्षुषां ग्रहः ।
श्रमस्य योनिर्बलवीर्ययोर्वधो
जरासमो नास्ति शरीरिणां रिपुः ॥३३॥

इदं विदित्वा निधनस्य दैशिकं जराभिधानं जगतो महद्भयं ।
अहं वपुष्मान्बलवान्युवेति वा न मानमारोढुमनार्यमर्हसि ॥३४॥
अहं ममेत्येव च रक्तचेतसां शरीरसंज्ञा तव यः कलौ ग्रहः । .
तमुत्सृजैवं यदि शाम्यता भवेद्भयं ह्यहं चेति ममेति चार्छति ॥३५॥
यदा शरीरे न वशोऽस्ति कस्यचिन्निरस्यमाने विविधैरुपप्लवैः ।
कथं क्षमं वेत्तुमहं ममेति वा शरीरसंज्ञं गृहमापदामिदं ॥३६॥

L has 30 a 1–c 2, c 10–d 5 p, d 6–d 9, 31 b 2–b 5 f, b 6 32 a 4, a 5–a 7 p, a 10–a 12 f, b 7–b 12 p, 33 c 12–d 7 p, d 8–34 a 1 a 2–a 3 p, a 4–a 7 f, (fol 161) 36 a 10 b 4, b 5–b 12 p

30 d, अभाविमा॰ P    31 a, ॰पीन्दितो P, ॰रभ्मनतरसंमपिपिद्गतो C    c, यथा-जरायन्तुतिपीन्दिता P, ॰पिपिद्गता C    32 a, करपत्रपीदितं P, S c    b, भिःमत्त-भिकधा P.    d, अथा P    34 a, P om म    c, वपुष्मानकरवान्युवेति PC, S, G and Gu. c    d, P om one ममा ; C.c    35 b, ॰सघा (or घो) भयधः P, ॰सघो भयजः C ; S.c.    c, शाम्यते PC    c d, भयाह्रय C    d, चार्च्छति P    36 a, शरीरेच-यथो P, शरीर न वशो C    a b, कस्यचिन्निरेस्यमाम (or ? मे) विविधैरू॰ P, ॰न्निरस्यमानं C    c, क्षय P

सपन्नगे यः कुगृहे सदाशुचौ रमेत नित्यं प्रतिसंस्कृतेऽबले ।
स दुष्टधातावशुचा चलाचले रमेत काये विपरीतदर्शनः ॥३७॥
यथा प्रजाभ्यः कुनृपो बलाद्बलीन्हरत्यशेषं च न चाभिरक्षति ।
तथैव कायो वसनादिसाधनं हरत्यशेषं च न चानुवर्तते ॥३८॥
यथा प्ररोहन्ति तृणान्ययत्नतः क्षितौ प्रयत्नात्तु भवन्ति शालयः ।
तथैव दुःखानि भवन्त्ययत्नतः सुखानि यत्नेन भवन्ति वा न वा॥३९॥
शरीरमार्तं परिकर्षतश्चलं न चास्ति किंचित्परमार्थतः सुखं ।
सुखं हि दुःखप्रतिकारसेवया स्थिते च दुःखे तनुनि व्यवस्यति ॥४०॥
यथानपेक्ष्याग्र्यमपीप्सितं सुखं प्रबाधते दुःखमुपेतमण्वपि ।
तथानपेक्ष्यात्मनि दुःखमागतं न विद्यते किंचन कस्यचित्सुखं ॥४१॥

शरीरमीदृग्बहुदुःखमध्रुवं
फलानुरोधादथ नावगच्छसि ।
द्रवत्फलेभ्यो धृतिरश्मिभिर्मनो
निगृह्यतां गौरिव शस्यलालसा ॥४२॥

न कामभोगा हि भवन्ति तृप्तये हवींषि दीप्तस्य विभावसोरिव ।
यथा यथा कामसुखेषु वर्तते तथा तथेच्छा विषयेषु वर्धते ॥४३॥
यथा च कुष्ठव्यसनेन दुःखितः प्रतापनान्नैव शमं निगच्छति ।
तथेन्द्रियार्थेष्वजितेन्द्रियश्चरन्न कामभोगैरुपशान्तिमृच्छति ॥४४॥

I has 38 c 10 39 a 4 a 5–a 6 p a 7–a 12 f b 5 b 9 f 40 d 6–d 12 p 41 a 1 a 2 f a 3–d 11 d 12 42 a 6 j a 7–a 9 f b 8–c 1 p c 2–c 6 c 7–c 9 f d 10–d 12 p 43 a 1 44 d 12

37 d विपरित° P 38 a b °दलीहर° P 39 a गृहान्ययत्नत P I I c b चितौ मयत्नात्तु P 40 c कुःखप्रति° P 41 a °पेषाग्म(?)म° P c तथानवेक्षा° LPC 42 a शरीरमिद्° P P om ख b °यवायगच्छसि PC d निगृह्यतांगोरीव I 43 b हवीषि I c I om यु d वद्यते P 44 a तथापकुष्वषेसनेदु° P b प्रतापपक्षिव LC प्रतापयधैव I c °थारेष्व° I d °मृच्छंति P

यथा हि भैषज्यसुखाभिकाङ्क्षया भजेत रोगान्न भजेत तत्क्षमं ।
तथा शरीरे बहुदुःखभाजने रमेत मोहाद्विषयाभिकाङ्क्षया ॥४५॥
अनर्थकामः पुरुषस्य यो जनः स तस्य शत्रुः किल तेन कर्मणा ।
अनर्थमूला विषयाश्च केवला ननु प्रहेया विषमा यथारयः ॥४६॥
इहैव भूत्वा रिपवो वधात्मकाः प्रयान्ति काले पुरुषस्य मित्रतां ।
परत्र चैवेह च दुःखहेतवो भवन्ति कामा न तु कस्यचिच्छिवाः ॥४७॥
यथोपयुक्तं रसवर्णगन्धवद्वधाय किंपाकफलं न पुष्टये ।
निषेव्यमाणा विषयाश्चलात्मनो भवन्त्यनर्थाय तथा न भूतये ॥४८॥
तदेतदाज्ञाय विपाप्मनात्मना विमोक्षधर्माद्युपसंहितं हितं ।
जुषस्व मे सज्जनसंमतं मतं प्रचक्ष्व वा निश्चयमुद्गिरन् गिरं ॥४९॥
इति हितमपि बह्वपीदमुक्तः श्रुतमहता श्रमणेन तेन नन्दः ।
न धृतिमुपययौ न शर्म लेभे द्विरद इवातिमदो मदान्धचेताः ॥५०॥

नन्दस्य भावमवगम्य ततः स भिक्षुः
पारिप्लवं गृहसुखाभिमुखं न धर्मे ।
सत्त्वाशयानुशयभावपरीक्षकाय
बुद्धाय तत्त्वविदुषे कथयांचकार ॥५१॥

सौन्दरनन्दे महाकाव्ये मदापवादो नाम नवमः सर्गः ।

L has 45 a 1–a 4, a 5–a 8 p, a 9 f, a 10–50 l 4, (fol. 17 a) 50 b 5–end L.

45 a l, °सुखभिकाचयामजेन P   c, बहुदुःखभा° L.   d, समेत P   46 a, अर्थ P. b, प्रयः P   d, विषया LPC, G c   47 b, मित्रता P   48 a, रसवर्णं° L. b, पुष्टये P.   c, निषेव्यमाणा P   d, भवन्त्य° P   49 a, तदेतदा° P.   विपाप्मना° P.   b, °धर्माद्युप° P   d, प्रचक्ष LP   50 c, °ययांपययमौ (or मर्ग?) मि° P. d, द्विरद P.   51 b, पारिप्लव P   d, तत्त्वविदुषे LP   °चकारः LP.   col., सौन्दरा° P.   नवः P.

## CANTO X

श्रुत्वा ततः सद्व्रतमुत्सिसृक्षुं भार्यां दिदृक्षुं भवनं विविक्षुं ।
नन्दं निरानन्दमपेतधैर्यमभ्युज्जिहीर्षुर्मुनिराजुहाव ॥१॥
तं प्राप्तमप्राप्तविमोक्षमार्गं पप्रच्छ चित्तस्खलितं सुचित्तः ।
स ह्रीमते ह्रीविनतो जगाद स्वं निश्चयं निश्चयकोविदाय ॥२॥
नन्दं विदित्वा सुगतस्ततस्तु भार्याभिधाने तमसि भ्रमन्तं ।
पाणौ गृहीत्वा वियदुत्पपात मग्नं जले साधुरिवोज्जिहीर्षुः ॥३॥
काषायवस्त्रौ कनकावदातौ विरेजतुस्तौ नभसि प्रसन्ने ।
अन्योन्यसंश्लिष्टविकीर्णपक्षौ सरःप्रकीर्णाविव चक्रवाकौ ॥४॥
तौ देवदारूत्तमगन्धवन्तं नदीसरःप्रस्रवणौघवन्तं ।
आजग्मतुः काञ्चनधातुमन्तं देवर्षिमन्तं हिमवन्तमाशु ॥५॥
तस्मिन् गिरौ चारणसिद्धजुष्टे शिवे हविर्धूमकृतोत्तरीये ।
अगम्य पारस्य निराश्रयस्य तौ तस्थतुर्द्वीप इवाम्बरस्य ॥६॥
शान्तेन्द्रिये तत्र मुनौ स्थिते तु सविस्मयं दिक्षु ददर्श नन्दः ।
दरीश्च कुञ्जांश्च वनौकसश्च विभूषणं रक्षणमेव चाद्रेः ॥७॥

L has 1 a 1 6 d 11 7 a 1 a 11 f 1 1 b 6 c 1–c 2 f c 3 7 c 8–d 7 f

1 b भार्य्यां P विविक्षु (क्षुं) P c d °मपेत° I °मपेतधैर्य्यमभ्युर्ज्जिहीर्षुमुनिरा ज्रुहाव I 2 b चित्तस्खलित P c ह्रीविनतो P 3 b भार्य्याविधाने P d मग्न IP मग्न C मग्न Gn °हीर्षु I 4 b प्रसन्ने P c d °पक्षेसर पक्षौ° I 5 b °प्रस्रवणौघ° LP c काञ्चन° L 6 a °जुष्टे P b हविर्द्रुम° I c अगम्य पारस्य C d तस्थतुर्द्वीपइवाम्बरस्य I 7 c कुञ्जांश्च P d विभूषणं I चाद्रे I

बद्धायते तत्र सिते हि शृङ्गे संक्षिप्तबर्हः शयितो मयूरः ।
भुजे बलस्यायतपीनबाहोर्वैडूर्यकेयूर इवावभासे ॥८॥
मनःशिलाधातुशिलाश्रयेण पीताकृतांसो विरराज सिंहः ।
संतप्तचामीकरभक्तिचित्रं रूप्याङ्गदं शौर्णमिवाम्बिकस्य ॥९॥
व्याघ्रः क्रमव्यायतखेलगामी लाङ्गूलचक्रेण कृतापसव्यः ।
बभौ गिरेः प्रस्रवणं पिपासुर्दित्सन्पितृभ्योऽम्भ इवावतीर्णः ॥१०॥
चलत्कदम्बे हिमवन्नितम्बे तरौ प्रलम्बे चमरो ललम्बे ।
छेत्तुं विलग्नं न शशाक बालं कुलोद्गतां प्रीतिमिवार्यवृत्तः ॥११॥
सुवर्णगौराश्च किरातसंघा मयूरपत्त्रोज्ज्वलगात्रलेखाः ।
शार्दूलपातप्रतिमा गुहाभ्यो निष्पेतुरुद्गार इवाचलस्य ॥१२॥
दरीचरीणामतिसुन्दरीणां मनोहरश्रोणिकुचोदरीणां ।
वृन्दानि रेजुर्दिशि किंनरीणां पुष्पोत्कचानामिव वल्लरीणां ॥१३॥
नगान्नगस्योपरि देवदारूनायासयन्तः कपयो विचेरुः ।
तेभ्यः फलं नापुरतोऽपजग्मुर्मोघप्रसादेभ्य इवेश्वरेभ्यः ॥१४॥
तस्मात्तु यूथादपसार्यमाणां निष्पीडितालक्तकरक्तवक्त्रां ।
शाखामृगीमेकविपन्नदृष्टिं दृष्ट्वा मुनिर्नन्दमिदं बभाषे ॥१५॥

1 has 8a9f a10p a11 9a2 a3-a7f b8 b10f 10c9-c11f d1-d8 d9-11a3f, 13a4 a8f a9-a10 (fol 17b) 13a11 b6p b7-b8f 15c5-d11

8a, शिते P b, सक्षिप्त° P मयुर. P c P om षा 9a मनशिला P and app. I b तापीतकताशो P पीतीकृताङ्गो C c ततप्त° P, Cc d रुप्याङ्गद P °वाम्बरस्य PC 10a °गामि P b, कृतापसव्य° P 11c d °त्सपितृभ्योम्बु P 11c चेत्तु P शशाङ्क(?) P d कुलोद्गत P Gc 12a किराति° P b, मयूरपित्तोज्ज्वल° P, °पिच्छो° C d निष्पतुरुद्गार P 13c रेजुर्दशिकिरीणा P 14a, देवदारु° P c, येभ्य. C d इवश्वरेभ्य. P 15a तस्मात्तयूथादपसार्य-माणां P, Cc

का नन्द रूपेण च चेष्टया च संपश्यतश्चारुतरा मता ते ।
एषा मृगी वैकविपन्नदृष्टिः स वा जनो यत्र गता तवेष्टिः ॥१६॥
इत्येवमुक्तः सुगतेन नन्दः कृत्वा स्मितं किंचिदिदं जगाद ।
क्व चोत्तमस्त्री भगवन्वधूस्ते मृगी नगक्लेशकरी क्व चैषा ॥१७॥
ततो मुनिस्तस्य निशम्य वाक्यं हेत्वन्तरं किंचिदवेक्षमाणः ।
आलम्ब्य नन्दं प्रययौ तथैव क्रीडावनं वज्रधरस्य राज्ञः ॥१८॥
ऋतावृतावाकृतिमेक एके क्षणे क्षणे बिभ्रति यत्र वृक्षाः ।
चित्रां समस्तामपि केचिदन्ये षण्णामृतूनां श्रियमुद्वहन्ति ॥१९॥
पुष्यन्ति केचित्सुरभीरुदारा मालाः स्रजश्च ग्रथिता विचित्राः ।
कर्णानुकूलानवतंसकांश्च प्रत्यर्थिभूतानिव कुण्डलानां ॥२०॥

रक्तानि फुल्लाः कमलानि यत्र
प्रदीपवृक्षा इव भान्ति वृक्षा ।
प्रफुल्लनीलोत्पलरोहिणोऽन्ये
सोन्मीलिताक्षा इव भान्ति वृक्षा ॥२१॥

नानाविरागाण्यथ पाण्डराणि सुवर्णभक्तिव्यवभासितानि ।
अतान्तवान्येकघनानि यत्र सूक्ष्माणि वासांसि फलन्ति वृक्षा ॥२२॥
हारान्मणीनुत्तमकुण्डलानि केयूरवर्याण्यथ नूपुराणि ।
एवंविधान्याभरणानि यत्र स्वर्गानुरूपाणि फलन्ति वृक्षाः ॥२३॥

L has 16 a 1–a 4 p a 5–a 7 f b 5 f b 6 l 11 p 17 d 7–d 9 p d 10 19 b 6 b 7 f b 11 f c 1–c 6 c 7–c 11 f 20 a 3–a 5 p a 6 23 d 11

16 b सपस्य° (m) I d चार्जमो P 17 b किदिदं with चि added in margin I 18 a मनिष्टस्यनिशस्य(म्य) P b किचिद्वेषमाम I d वद्मधरस्य I 19 c चित्रामस्तामम° P d षर्णामृ° I 20 d मत्यर्थि° P 21 c P om हि 22 a °रागाण्यथ P c षतान्त° P d शुक्ष्माणि P 23 d स्वर्गागुरूपाणि P

वैडूर्यनालानि च काञ्चनानि पद्मानि वज्राङ्कुरकेसराणि ।
स्पर्शक्षमाण्युत्तमगन्धवन्ति रोहन्ति निष्कम्पतला नलिन्यः ॥२४॥
यत्रायतांश्चैव ततांश्च तांस्तान्वाद्यस्य हेतून्सुषिरान् घनांश्च ।
फलन्ति वृक्षा मणिहेमचित्राः क्रीडासहायास्त्रिदशालयानां ॥२५॥
मन्दारवृक्षांश्च कुशेशयांश्च पुष्पानतान् कोकनदांश्च वृक्षान् ।
आक्रम्य माहात्म्यगुणैर्विराजन् राजायते यत्र स पारिजातः ॥२६॥
कृष्टे तपःशीलहलैरखिन्नैस्त्रिपिष्टपक्षेत्रतले प्रसूताः ।
एवंविधा यत्र सदानुवृत्ता दिवौकसां भोगविधानवृक्षाः ॥२७॥
मनःशिलाभैर्वदनैर्विहंगा यत्राक्षिभिः स्फाटिकसंनिभैश्च ।
शावैश्च पक्षैरभिलोहितान्तैर्माञ्जिष्ठकैरर्धसितैश्च पादैः ॥२८॥
चित्रैः सुवर्णच्छदनैस्तथान्ये वैडूर्यनीलैर्नयनैः प्रसन्नैः ।
विहंगमा शिञ्जिरिकाभिधाना रुतैर्मनःश्रोत्रहरैर्भ्रमन्ति ॥२९॥
रक्ताभिरग्रेषु च वल्लरीभिर्मध्येषु चामीकरपिञ्जराभिः ।
वैडूर्यवर्णाभिरुपान्तमध्येष्वलंकृता यत्र खगाश्चरन्ति ॥३०॥
रोचिष्णवो नाम पतत्रिणोऽन्ये दीप्ताग्निवर्णा ज्वलितैरिवास्यैः ।
भ्रमन्ति दृष्टीर्वपुषाक्षिपन्तः स्वनैः शुभैरप्सरसो हरन्तः ॥३१॥

I has 24 a 1 27 c 5 (fol 18 a) 27 c 6 31 d 11

24 a वैडुर्यनालानिच I b वज्रांकुरकेसराणि P c °ण्युत्तमे° P d निस्काम्पत लामलिन्य I 25 a यत्रायतांश्चैवतताश्च P b हेतून्सुपिरा I हेतुन्सुषिरा P P om. from 25 c 2 to 26 d 1 and has it added below in a handwriting resembling hatin c मणिमचित्रा I 26 a °वृक्षांश्चकुशेशयांश्च I b °नदांश्च P c I om. म्य cd °गुणैर्विराजन्नमाया° P 27 a °रखिन्नैस्त्रि° L °शीलफलैरखिन्नै° P b °पिष्टपक्षेत्रतले P 28 c शावैश्चपक्षैरभि° PC d °र्माञ्जिष्ठ° I P 29 c शिंजि रिका° P d °हरैर्भ्रमन्ति P 30 b °पिञ्जराभि P 31 b दीप्ताग्नि° L c दृष्टिर्व° P d स्वनैः(or रै°) L स्वनै P

यचेष्टचेष्टाः सततप्रहृष्टा निरर्तयो निर्जरसो विशोकाः ।
स्वैः कर्मभिर्हीनविशिष्टमध्याः स्वयंप्रभाः पुण्यकृतो रमन्ते ॥३२॥

पूर्वं तपोमूल्यपरिग्रहेण स्वर्गक्रयार्थं कृतनिश्चयानां ।
मनांसि खिन्नानि तपोधनानां हरन्ति यचाप्सरसो लडन्त्यः ॥३३॥

नित्योत्सवं तं च निशाम्य लोकं निस्तन्द्रिनिद्रारतिशोकरोगं ।
नन्दो जरामृत्युवशं सदार्तं मेने श्मशानप्रतिमं नृलोकं ॥३४॥

ऐन्द्रं वनं तच्च ददर्श नन्दः समन्ततो विस्मयफुल्लदृष्टिः ।
हर्षान्विताश्चाप्सरसः परीयुः सगर्वमन्योन्यमवेक्षमाणाः ॥३५॥

सदा युवत्यो मदनैककार्याः साधारणाः पुण्यकृतां विहाराः ।
दिव्याश्च निर्दोषपरिग्रहाश्च तपःफलस्याश्रयणं सुराणां ॥३६॥

तासां जगुर्धीरमुदात्तमन्याः पद्मानि काश्चिल्ललितं बभञ्जुः ।
अन्योन्यहर्षान्ननृतुस्तथान्याश्चित्राङ्गहाराः स्तनभिन्नहाराः ॥३७॥

कासांचिदासां वदनानि रेजुर्वनान्तरेभ्यश्चलकुण्डलानि ।
व्याविद्धपर्णेभ्य इवाकरेभ्यः पद्मानि कारण्डवघट्टितानि ॥३८॥

ताः निःसृताः प्रेक्ष्य वनान्तरेभ्यस्तडित्पताका इव तोयदेभ्यः ।
नन्दस्य रागेण तनुर्विवेपे जले चले चन्द्रमसः प्रभेव ॥३९॥

L has 32 a 1–37 a 11, b 2, b 4–b 10, b 11–c 2 p, c 3–c 4, c 5 p, c 10–d 1 f, d 8 f, d 9–d 11. 38 a 1, b 4 f, c 2–c 6 f, d 9–d 11 f. 39 b 10–c 2 f, c 3 p, c 4–d 11. L and P have verse 33 after verse 37 and L has of it a 1–d 5, d 6 p, d 7–d 11 f.

32 a. यचेपुचेष्टासतत प्र° P  b. निरातंयो G  c. कर्म्मनिर्ही° P.  d. पुन्यकृतो P.
33 a. °परिग्रंहेण L.  b. स्वर्गं° L, सर्गंक्रयार्थं P  c. मनांसि P  d. लडन्त्यः P, C e
34 c. सदार्त्तं P  35 d °यमाणाः P.  36 b विहारः P  37 a. जगुर्धीरमु-दात्तम° P  c. °प्रनृत्त° P  d °श्चिचाग्रहारा P  38 a कासांचिदासां P  c °न्तरेभ्य P  d कादम्बविमृ° P  39 c तनुर्विवेदे P

वपुश्च दिव्यं ललिताश्च चेष्टास्ततः स तासां मनसा जहार ।
कौतूहलावर्जितया च दृष्ट्या संश्लेषतर्षादिव जातरागः ॥४०॥
स जाततर्षोऽप्सरसः पिपासुस्तत्प्राप्तयेऽधिष्ठितविक्लवार्तः ।
लोलेन्द्रियाश्वेन मनोरथेन जेह्रीयमाणो न धृतिं चकार ॥४१॥
यथा मनुष्यो मलिनं हि वासः क्षारेण भूयो मलिनीकरोति ।
मलक्षयार्थं न मलोद्भवार्थं रजस्तथास्मै मुनिराचकर्ष ॥४२॥
दोषांश्च कायाद्भिषगुज्जिहीर्षुर्भूयो यथा क्लेशयितुं यतेत ।
रागं तथा तस्य मुनिर्जिघांसुर्भूयस्तरं रागमुपानिनाय ॥४३॥
दीपप्रभां हन्ति यथान्धकारे सहस्ररश्मेरुदितस्य दीप्तिः ।
मनुष्यलोके द्युतिमङ्गनानामन्तर्दधात्यप्सरसां तथा श्रीः ॥४४॥
महच्च रूपं स्वणु हन्ति रूपं शब्दो महान्हन्ति च शब्दमल्पं ।
गुर्वी रुजा हन्ति रुजां च मृद्वीं सर्वो महान्हेतुरणोर्वधाय ॥४५॥
मुनेः प्रभावाच्च शशाक नन्दस्तद्दर्शनं सोढुमसह्यमन्यैः ।
अवीतरागस्य हि दुर्बलस्य मनो दहेदप्सरसां वपुःश्रीः ॥४६॥
मत्वा ततो नन्दमुदीर्णरागं भार्यानुरोधादपवृत्तरागं ।
रागेण रागं प्रतिहन्तुकामो मुनिर्विरागो गिरमित्युवाच ॥४७॥

I has 40 a 1–a 4 a 5–a 7 f 42 a 3–a 4 f a 5–a 8, (fol 18 b) 42 a 9–b 9 b 10–c 3 f, 44 c 1–45 a 4 a 5–c 6 p, c 8–d 9 f 46 a 3–a 4 f, b 2–b 5 f, d 8–d 9 f, d 10–47 d 11

40 a ललिताप P b तासा P जहार P 41 b, विधित॰ P Cc c, ॰ध्या- श्विण P d, जिह्रीयमाणो P 42 a मगुप्या P c, ॰पयार्थ P ॰धार्यं P d ॰चकेर्प P. 43 a b, दोपास्तकायाभिषगुज्जिगीर्षुभू॰ P, Cc 44 a, ॰प्रभा P यथाधकारे (m) P. काले C 45 a, स्वगुहतु P b, सर्वे(?)महा॰ P शब्दमाल्पं P c, so L a; P, रुजासमृद्वी P 46 b, नन्दस्तद्दर्शनशोढुमशह्यम॰ P Cc d वपुश्रीः LP 47 a ॰राग P b ॰रागा P d गिरमृत्यु॰ P

एताः स्त्रियः पश्य दिवौकसस्त्वं निरीक्ष्य च ब्रूहि यथार्थतत्त्वं ।
एताः कथं रूपगुणैर्मतास्ते स वा जनो यत्र गतं मनस्ते ॥४८॥
अथाप्सरःस्वेव निविष्टदृष्टी रागाग्निनान्तर्हृदये प्रदीप्तः ।
सगद्गदं कामविपक्तचेताः कृताञ्जलिर्वाक्यमुवाच नन्दः ॥४९॥
हर्यङ्गनासौ मुषितैकदृष्टिर्यदन्तरे स्यात्तव नाथ वध्वाः ।
तदन्तरेऽसौ कृपणा वधूस्ते वपुष्मतीरप्सरसः प्रतीत्य ॥५०॥
आस्था यथा पूर्वमभून्न काचिदन्यासु मे स्त्रीषु निशाम्य भार्यां ।
तस्यां ततः सम्प्रति काचिदास्था न मे निशाम्यैव हि रूपमासां ॥५१॥
यथा प्रतप्तो मृदुनातपेन दह्येत कश्चिन्महतानलेन ।
रागेण पूर्वं मृदुनाभितप्तो रागाग्निनानेन तथाभिदह्ये ॥५२॥
वाग्वारिणा मां परिषिञ्च तस्माद्यावन्न दह्ये स इवाञ्जशत्रुः ।
रागाग्निरद्यैव हि मां दिधक्षुः कक्षं सवृक्षाग्रमिवोत्थितोऽग्निः ॥५३॥
प्रसीद सीदामि विमुञ्च मा मुने वसुन्धराधैर्य न धैर्यमस्ति मे ।
असून्विमोक्ष्यामि विमुक्तमानस प्रयच्छ वा वागमृतं मुमूर्षवे ॥५४॥

अनर्थभोगेन विघातदृष्टिना
प्रमाददंष्ट्रेण तमोविषाग्निना ।
अहं हि दष्टो हृदि मन्मथाहिना
विधत्स्व तस्मादगदं महाभिषक् ॥५५॥

L has 48 a 1–c 11 l 1–d 11 f 49 a 3 f a 4 55 d 12

48 a एता P दिवोक° LP b निरीच P यथाथतत्व PC 49 a LP om *visarga* b रागार्नि° L c सग्द्गद P °पक्तचता P 50 a हर्य्यङ्गणासौ P d वपुष्मतीरि° P 51 b भार्य्या P 52 b दह्येचेभकाकश्चिम्म° P c पूर्व्वं P 53 a वाष्वारिणा P c दधत्तु P d °वृचार्ग्रमि° L 54 b वसुद्धरा° P थैर्यमस्ति P c असूद्वि° L असुद्विमोचामि P °मानस LP Gc d प्रपच्छवाचाग° P 55 a b °भोगेणविघातदृष्टिणा (n) प्रसाद° P c °थाहिनो P d °दगतमहाभिषेक् P

अनेन दंष्टो मदनाहिना हि ना
न कश्चिदात्मन्यनवस्थितः स्थितः ।
मुमोह बोध्योर्ह्यचलात्मनो मनो
बभूव धीमांश्च स शन्तनुस्तनुः ॥५६॥
स्थिते विशिष्टे त्वयि संश्रये श्रये
यथा न यामीह वसन्दिशं दिशं ।
यथा च लब्ध्वा व्यसनक्षयं क्षयं
व्रजामि तन्मे कुरु शंसतः सतः ॥५७॥

ततो जिघांसुर्हृदि तस्य तत्तमस्तमोनुदो नक्तमिवोत्थितं तमः ।
महर्षिचन्द्रो जगतस्तमोनुदस्तमःप्रहीणो निजगाद गौतमः ॥५८॥
धृतिं परिष्वज्य विधूय विक्रियां निगृह्य तावच्छ्रुतचेतसी शृणु ।
इमा यदि प्रार्थयसे त्वमङ्गना विधत्स्व शुल्कार्थमिहोत्तमं तपः ॥५९॥
इमा हि शक्या न बलान्न सेवया न संप्रदानेन न रूपवत्तया ।
इमा ह्रियन्ते खलु धर्मचर्यया सचेत्प्रहर्षश्चर धर्ममादृतः ॥६०॥
इहाधिवासो दिवि दैवतैः समं वनानि रम्याण्यजराश्च योषितः ।
इदं फलं स्वस्य शुभस्य कर्मणो न दत्तमन्येन न चाप्यहेतुतः ॥६१॥
क्षितौ मनुष्यो धनुरादिभिः श्रमैः स्त्रियः कदाचिद्धि लभेत वा न वा ।
असंशयं यस्त्विह धर्मचर्यया भवेयुरेता दिवि पुण्यकर्मणः ॥६२॥

L has 56 a 1–b 4, (fol 19 a) 56 b 5–62 d 12

56 b, °स्थितस्थित: LP c, घोद्योर्ह° LP app., पाप्छोर्हि J, घोढोर्हि H; G c
57 a, स्थित P. b, यामीवङ्कसन्दिशं L, योमीवङ्कसन्दिसं(m) P यायी C, यायां G
c, मव्धा LP; H and S c 58 a, जिघांसुर्ह° P c, महर्षिघप्तो (? or प्तो ?) P.
d, निजगाम P गोतम: LP 59 c प्रार्थयसेत्वमगना P 60 a, प्रथयाम्न L,
प्रत्याम्न P, प्रथवन C, प्रवर्य हरितुं H d, धर्म्मेमा° P 61 b, वनामि P
62 a, °द्गिग्मिमे L, मनुष्याधनुरामियमे P d पुन्य° P

तदप्रमत्तो नियमे समुद्यतो रमस्व यद्यप्सरसोऽभिलिप्ससे ।
अहं च तेऽत्र प्रतिभूः स्थिरे व्रते यथा त्वमाभिर्नियतं समेष्यसि ॥६३॥
अतःपरं परममिति व्यवस्थितः परां धृतिं परममुनौ चकार सः ।
ततो मुनिः पवन इवाम्बरात्पतन्प्रगृह्य तं पुनरगमन्महीतलं ॥६४॥

सौन्दरनन्दे महाकाव्ये स्वर्गनिदर्शनो नाम दशमः सर्गः ।

L has 63 a 1-64 d 1, d 2-d 5 p, d 6-d 12, d 13 p, col., 1, 2-4 f, 20-22.

63 a, P has मि twice. b, यरस्व G. °लि(ल)प्ससे L, °लप्ससे P. 64 a, परंममिति P. b, परा P. परममसौ P. c d, परमदवाम्बरात्पततप्रघ्ज्य P, °त्पतत्प्र° L. col., सौन्दरा° P. °काव्येनस्वर्गमिदशनो P.

## CANTO XI

ततस्ता योषितो दृष्ट्वा नन्दो नन्दनचारिणीः ।
बबन्ध नियमस्तम्भे दुर्दमं चपलं मनः ॥१॥
सोऽनिष्टनैष्क्रम्यरसो म्लानतामरसोपमः ।
चचार विरसो धर्मं निवेश्याप्सरसो हृदि ॥२॥
तथा लोलेन्द्रियो भूत्वा दयितेन्द्रियगोचरः ।
इन्द्रियार्थवशादेव बभूव नियतेन्द्रियः ॥३॥
कामचर्यासु कुशलो भिक्षुचर्यासु विक्लवः ।
परमाचार्यविष्टब्धो ब्रह्मचर्यं चचार सः ॥४॥
संवृतेन च शान्तेन तीव्रेण मदनेन च ।
जलाग्नेरिव संसर्गाच्छशाम च शुशोष च ॥५॥
स्वभावदर्शनीयोऽपि वैरूप्यमगमत्परं ।
चिन्तयाप्सरसां चैव नियमेनायतेन च ॥६॥
प्रस्तवेष्वपि भार्यायां प्रियभार्यस्तथापि सः ।
वीतराग इवोत्तस्थौ न जहर्ष न चुक्षुभे ॥७॥

L has 1 a 1-2 a 1, a 2-a 8 f c 1-c 2 f, c 3 c 4-c 5 f, 3 a 5-a 6 f c 6-c 7 f 4 c 1-c 3 f, c 4-d 8, 5 a 1-b 2 P

1 a, दृष्टा LP  b, •चारिणी: P  d, चपर P  2 a, •नैक्रम्य• P  c, धर्मं P
3 c, •प्रसादेव P  4 c, •विसब्धो P  5 c, जलाग्न्योरिव C.  d, •च्छशाम P
6 a, सतावे• P, स तावद् C  b •त्पुर P  7 a, प्रस्तावेष्वपि भार्यायाः C  c, इवा त्तस्थौ PC.  d, भवहर्ष P

तं व्यवस्थितमाज्ञाय भार्यारागात्पराङ्मुखं ।
अभिगम्याब्रवीन्नन्दमानन्दः प्रणयादिदं ॥८॥
अहो सदृशमारब्धं श्रुतस्याभिजनस्य च ।
निगृहीतेन्द्रियः स्वस्थो नियमे यदि संस्थितः ॥९॥
अभिष्वक्तस्य कामेषु रागिणो विषयात्मनः ।
यदियं संविदुत्पन्ना नेयमल्पेन हेतुना ॥१०॥
व्याधिरल्पेन यत्नेन मृदुः प्रतिनिवार्यते ।
प्रबलः प्रबलैरेव यत्नैर्नश्यति वा न वा ॥११॥
दुर्हरो मानसो व्याधिर्बलवांश्च तवाभवत् ।
विनिवृत्तो यदि स ते सर्वथा धृतिमानसि ॥१२॥
दुष्करं साध्वनार्येण मानिना चैव मार्दवं ।
अतिसर्गश्च लुब्धेन ब्रह्मचर्यं च रागिणा ॥१३॥
एकस्तु मम संदेहस्तवास्यां नियमे धृतौ ।
अत्रानुनयमिच्छामि वक्तव्यं यदि मन्यसे ॥१४॥
आर्जवाभिहितं वाक्यं न च गन्तव्यमन्यथा ।
रूक्षमप्याशये शुद्धे रूक्षतो नैति सज्जनः ॥१५॥
अप्रियं हि हितं स्निग्धमस्निग्धमहितं प्रियं ।
दुर्लभं तु प्रियहितं स्वादु पथ्यमिवौषधं ॥१६॥

L has 8 a 6 l a 7 b 3 (fol 19 b) 8 b 4 b 6 b 7–d 1 l 11 c 6–d 1 f d 2 p d 3 12 b 6 b 7–c 4 f 13 a 2–a 3 f 15 a 2 a 4 f a 5 16 d 8

8 b °रागात्पश्चुख P d प्रन(m)या° P 11 b मृदुप्रतिनिवार्यत P
12 b °भवेत् P c विनिवृत्ता P 13 a दुस्कारसाधना° P G and J c
14 b °वास्याम्वि(ति)° P 15 b मन्तव्यम° S and J c रुप्यम° P d रूप्यतो P

विश्वासस्वार्थचर्या च सामान्यं सुखदुःखयोः ।
मर्षणं प्रणयश्चैव मित्रवृत्तिरियं सतां ॥१७॥
तदिदं त्वा विवक्षामि प्रणयान्न जिघांसया ।
त्वच्छ्रेयो हि विवक्षा मे यतो नार्हाम्युपेक्षितुं ॥१८॥
अप्सरोभृतको धर्मं चरसीत्यभिधीयसे ।
किमिदं भूतमाहोस्वित्परिहासोऽयमीदृशः ॥१९॥
यदि तावदिदं सत्यं वक्ष्याम्यत्र यदौषधं ।
औद्धत्यमथ वक्तॄणामभिधास्यामि तत्त्वतः ॥२०॥
श्लक्ष्णपूर्वमथो तेन हृदि सोऽभिहतस्तदा ।
ध्यात्वा दीर्घं निशश्वास किंचिच्चावाङ्मुखोऽभवत् ॥२१॥
ततस्तस्येङ्गितं ज्ञात्वा मनःसंकल्पसूचकं ।
बभाषे वाक्यमानन्दो मधुरोदर्कमप्रियं ॥२२॥
आकारेणावगच्छामि तव धर्मप्रयोजनं ।
यज्ज्ञात्वा त्वयि जातं मे हास्यं कारुण्यमेव च ॥२३॥
यथासनार्थं स्कन्धेन कश्चिद्गुर्वीं शिलां वहेत् ।
तद्वत्त्वमपि कामार्थं नियमं वोढुमुद्यतः ॥२४॥
तिताडयिषयासृप्नो यथा मेषोऽपसर्पति ।
तद्वदब्रह्मचर्याय ब्रह्मचर्यमिदं तव ॥२५॥

L°has 17 a 1 b 1 b 2 b 5 p b 6–c 1 c 6–c 8 18 b 1 b 3 p b 4 25 d 8

17 a P repeats या b °दु खया P d °रियग्रता P 18 c त्वच्क्रयो P विवक्षामि H यते L यतेनाह्याम्यु° P यतो नार्हस्यु° H and C 19 a °भूतकोधर्म्म P c तिमिद् P d °यमादृग्र P 20 c वक्तृणा° LP d तद्ध(?)ज LP तद्रुज C 21 b सोऽभिहित° J c दीर्घ P d °वाक्मुखोभवेत् P 22 a ततस्तस्य°P 23 c याद्याला LP P om त्वा 24 a यथामनाय P b कश्चिगुर्व्वी P 25 a °यथादृप्तो I नितान्तयियथादृष्टो P दृष्टो C दुष्टो G b मेषोपस° P d °चर्य्या मिदं P

चिक्रीषन्ति यथा पण्यं वणिजो लाभलिप्सया ।
धर्मचर्या तव तथा पण्यभूता न शान्तये ॥२६॥
यथा फलविशेषार्थं बीजं वपति कार्षकः ।
तद्वद्विषयकार्पण्याद्विषयांस्त्यक्तवानसि ॥२७॥
आकाङ्क्षेच्च यथा रोगं प्रतीकारसुखेप्सया ।
दुःखमन्विच्छति भवांस्तथा विषयतृष्णया ॥२८॥
यथा पश्यति मध्वेव न प्रपातमवेक्षते ।
पश्यस्यप्सरसस्तद्वद्भ्रंशमन्ते न पश्यसि ॥२९॥
हृदि कामाग्निना दीप्ते कायेन वहतो व्रतं ।
किमिदं ब्रह्मचर्यं ते मनसाब्रह्मचारिणः ॥३०॥
संसारे वर्तमानेन यदा चाप्सरसस्त्वया ।
प्राप्तास्त्यक्ताश्च शतशस्ताभ्यः किमिति ते स्पृहा ॥३१॥
तृप्तिर्नास्तीन्धनैरग्नेर्नाम्भसा लवणाम्भसः ।
नापि कामैः सतृष्णस्य तस्मात्कामा न तृप्तये ॥३२॥
अतृप्तौ च कुतः शान्तिरशान्तौ च कुतः सुखं ।
असुखे च कुतः प्रीतिरप्रीतौ च कुतो रतिः ॥३३॥
रिरंसा यदि ते तस्मादध्यात्मे धीयतां मनः ।
प्रशान्ता चानवद्या च नास्त्यध्यात्मसमा रतिः ॥३४॥

I has 26 a 1 28 d 8, (fol 20 a) 29 a 1–34 d 8

26 a, चिक्रीयन्ति P d, सान्तये P 27 d °द्विषयास्त्य° I P 28 b, प्रतिकार° P °सुखेस्त्रया LP, C c 29 a, मध्वे(?)व L मत्येव P, C c b, प्रपातेमवे° P c, °प्सर-सपुद्व° P 30 a द्वदिकामा° P 31 c, प्राप्तस्त्य° P शतसस्ता° P d, स्प(?)हा L, स्पृहा P 32 a b, °स्तीन्तैरत्नेर्ना° P b लवनाम्भसः P c, नापिकमिस° P 33 b °रसान्तौ P d रति P 34 c, प्रसान्ता P

न तत्र कार्यं तूर्यैस्ते न स्त्रीभिर्न विभूषणैः ।
एकस्त्वं यत्रतत्रस्थस्तया रत्याभिरंस्यसे ॥३५॥
मानसं बलवद्दुःखं तर्षे तिष्ठति तिष्ठति ।
तं तर्षं छिन्धि दुःखं हि तृष्णा चास्ति च नास्ति च ॥३६॥
संपत्तौ वा विपत्तौ वा दिवा वा नक्तमेव वा ।
कामेषु हि सतृष्णस्य न शान्तिरुपपद्यते ॥३७॥
कामानां प्रार्थना दुःखा प्राप्तौ तृप्तिर्न विद्यते ।
वियोगान्नियतः शोको वियोगश्च ध्रुवो दिवि ॥३८॥
कृत्वापि दुष्करं कर्म स्वर्गं लब्ध्वापि दुर्लभं ।
नृलोकं पुनरेवैति प्रवासात्स्वगृहं यथा ॥३९॥
यदा भ्रष्टस्य कुशलं शिष्टं किंचिन्न विद्यते ।
तिर्यक्षु पितृलोके वा नरके वोपपद्यते ॥४०॥
तस्य भुक्तवतः स्वर्गे विषयानुत्तमानपि ।
भ्रष्टस्यार्तस्य दुःखेन किमास्वादः करोति सः ॥४१॥
श्येनाय प्राणिवात्सल्यात्स्वमांसान्यपि दत्तवान् ।
शिबिः स्वर्गात्परिभ्रष्टस्तादृक्कृत्वापि दुष्करं ॥४२॥
शक्रस्यार्धासनं गत्वा पूर्वपार्थिव एव यः ।
सदेवत्वं गते काले मान्धाताधः पुनर्ययौ ॥४३॥

L has 35 a 1–40 b 8, c 1–c 3 p, c 4–d 4, d 5–d 8 p, 41 a 1–a 8, b 1–b 2 p, b 3–b 8, c 1–d 1 f, d 4–42 d 6, d 7–d 8 p, 43 a 1–b 8 f, c 1, c 2–c 4 f, d 8 f

35 a, कार्य्यं LP 36 a b, बलबदुखतर्षेतिस्थति P. c, ततर्षे P दुःषं LP d, तृष्णानास्ति LPC, G ( 38 a, कामाना P. b, प्राप्ति P 39 a, दुस्कारं P. b, स्वर्गलब्धापिदुस्लभं P c, पुनरेवेति LP 40 a, यथा L, P om.; H.c भ्रष्टस्य P. 41 b, P repeats भुक्त c, भ्रष्टस्यात्तस्यदुःखेन P 42 a, स्येनाय P b, °त्स्वमासा° P d, दुस्कर P 43 c, सदेवत्वे (त्वं) P गतः C d पुनर्यय्यौ P

राज्यं कृत्वापि देवानां पपात नहुषो भुवि ।
प्राप्तः किल भुजंगत्वं नाद्यापि परिमुच्यते ॥४४॥
तथैवेलिविलो राजा राजवृत्तेन संस्कृतः ।
स्वर्गं गत्वा पुनर्भ्रष्टः कूर्मीभूतः किलार्णवे ॥४५॥
भूरिद्युम्नो ययातिश्च ते चान्ये च नृपर्षभाः ।
कर्मभिर्द्यामभिक्रीय तत्क्षयात्पुनरत्यजन् ॥४६॥
असुराः पूर्वदेवास्तु सुरैरपहृतश्रियः ।
श्रियं समनुशोचन्तः पातालं शरणं ययुः ॥४७॥
किं च राजर्षिभिस्तावदसुरैर्वा सुरादिभिः ।
महेन्द्राः शतशः पेतुर्माहात्म्यमपि न स्थिरं ॥४८॥
संसदं शोभयित्वैन्द्रीमुपेन्द्रश्च त्रिविक्रमः ।
क्षीणकर्मा पपातोर्वीं मध्यादप्सरसां रसन् ॥४९॥
हा चैत्ररथ हा वापि हा मन्दाकिनि हा प्रिये ।
इत्यार्ता विलपन्तोऽपि गां पतन्ति दिवौकसः ॥५०॥
तीव्रं ह्युत्पद्यते दुःखमिह तावन्मुमूर्षतां ।
किं पुनः पततां स्वर्गाद्देवान्ते सुखसेविनां ॥५१॥

L has 44 a 1–a 4 f, b 2–b 5 f, c 2–c 4 f, 45 a 4–a 5 f, a 8–b 5 f, b 6–d 8, 46 a 1–a 3 p,
[illegible]

44 c, प्राप्त P. 45 a, तथैवेदि(m)विडो P, तथैव द्विविडो C b, °वृत्तन P. d, कूर्म्मोभुत P. 46 a, °दुम्ना P. b, एतेचान्येनृप° P. c, कर्म्मभिर्य्याम° P. 47 a, असुरा P b, °हृतः° P d, स(m)रणं P. 48 d, °र्म्महात्म्य° P. 49 a, सोभयि° P. b, °पेन्द्रश्चेन्द्रि° P, °पेन्द्रश्चण्ड° C. c, °कर्म्म P. 50 b, मन्दाकिनी P. d, गा P. द्विवोकसः P 51 a b, दुःखहिमतावत्मु° P, G. and Gu c. d, °देवान्त P, °द्देवान्त° C, °द्देपत्व° G, °द्देवात्त° Gu

रजो गृह्णन्ति वासांसि म्लायन्ति परमाः स्रजः ।
गात्रेभ्यो जायते स्वेदो रतिर्भवति नासने ॥५२॥
एतान्यादौ निमित्तानि च्युतौ स्वर्गाद्दिवौकसां ।
अनिष्टानीव मर्त्यानामरिष्टानि मुमूर्षतां ॥५३॥
सुखमुत्पद्यते यच्च दिवि कामानुपाश्नतां ।
यच्च दुःखं निपततां दुःखमेव विशिष्यते ॥५४॥
तस्मादस्वन्तमत्राणमविश्वास्यमतर्पकं ।
विज्ञाय क्षयिणं स्वर्गमपवर्गे मतिं कुरु ॥५५॥
यदा चैश्वर्यवन्तोऽपि क्षयिणः स्वर्गवासिनः ।
को नाम स्वर्गवासाय क्षेष्णवे स्पृहयेद्बुधः ॥५८॥
सूत्रेण बद्धो हि यथा विहंगो व्यावर्तते दूरगतोऽपि भूयः ।
अज्ञानसूत्रेण तथावबद्धो गतोऽपि दूरं पुनरेति लोकः ॥५९॥
कृत्वा कालविलक्षणं प्रतिभुवा मुक्तो यथा बन्धनाद्
भुक्त्वा वेश्मसुखान्यतीत्य समयं भूयो विशेद्बन्धनं ।
तद्वद्द्यां प्रतिभूवदात्मनियमैर्ध्यानादिभिः प्राप्तवान्
काले कर्मसु तेषु भुक्तविषयेष्वाकृष्यते गां पुनः ॥६०॥

L has 52 a 1–a 4 p, a 5–c 3 c 4–d 2 p, d 3–d 7 f, 53 a 2 f, a 3–a 7 p, a 8–b 5 f, c 2–c 4 f, c 5–c 8 p, d 6–d 8 f, 54 a 6–b 1 f, d 4–d 8 f, 55 a 1 60 d 19 For verses 56 and 57 (of which L has 56 a 1–57 c 1, c 2–c 8 f, d 2–d 3 f, d 8) see notes

52 a, गृह्नन्ति LP वासासि P b, परमाग्रजः P d, नासने P 53 b, स्वर्गा-द्दि॰ P. 54 d, दुःखमे॰ P 55 a ॰दस्वन्तमन्त्राणाम॰ P, ॰मत्राणाम॰ L. c, विज्ञायिक्षयिणं P d, L om मपवर्गे and has mark of reference to margin which is lost. 58 b, क्षयिणः P. 59 a, यथा 1 60 a कार॰ (m) P बद्धनाद L, बर्द्धनाद् P

अन्तर्जालगताः प्रमत्तमनसो मीनास्तडागे यथा
जानन्ति व्यसनं न रोधजनितं स्वस्थाश्चरन्त्यम्भसि ।
अन्तर्लोकगताः कृतार्थमतयस्तद्वद्दिवि ध्यायिनो
मन्यन्ते शिवमच्युतं ध्रुवमिति स्वं स्थानमावर्तकं ॥६१॥

तज्जन्मव्याधिमृत्युव्यसनपरिगतं मत्वा जगदिदं
संसारे भ्राम्यमाणं दिवि नृषु नरके तिर्यक्पितृषु च ।
यत्त्राणं निर्भयं यच्छिवमममरजरं निःशोकममृतं
तद्धेतोर्ब्रह्मचर्यं चर जहिहि चलं स्वर्गं प्रति रुचिं ॥६२॥

सौन्दरनन्दे महाकाव्ये स्वर्गापवादो नामैकादशः सर्गः ।

L has all

61 a, °स्तदागे P b, निरोध° LP, H c °श्चरत्यम्भसि P c, छत्वार्थम° L, P om तार्थ d °च्युत P स्व P 62 a, °मृत्युर्व्यशन° P c, यन्त्राण P and possibly L यच्छिवममरमजर LP, H c नि शोकमेमृत P d, °चर्य्य P स्वर्ग P. रुचिमिति LP col, सौन्दरा° P °कादशम° P सर्गं L

## CANTO XII

अप्सरोभृतको धर्मं चरसीत्यथ चोदितः ।
आनन्देन तदा नन्दः परं व्रीडमुपागमत् ॥१॥
तस्य व्रीडेन महता प्रमोदो हृदि नाभवत् ।
अप्रामोद्येन विमुखं नावतस्थे व्रते मनः ॥२॥
कामरागप्रधानोऽपि परिहाससमोऽपि सन् ।
परिपाकगते हेतौ न स तन्ममृषे वचः ॥३॥
अपरीक्षकभावाच्च पूर्वं मत्वा दिवं ध्रुवं ।
तस्मात्क्षेष्णुं परिश्रुत्य भृशं संवेगमेयिवान् ॥४॥
तस्य स्वर्गान्निववृते संकल्पाश्वो मनोरथः ।
महारथ इवोन्मार्गादप्रमत्तस्य सारथेः ॥५॥
स्वर्गतर्षान्निवृत्तश्च सद्यः स्वस्थ इवाभवत् ।
मृष्टादपथ्याद्विरतो जिजीविषुरिवातुरः ॥६॥
विसस्मार प्रियां भार्यामप्सरोदर्शनाद्यथा ।
तथानित्यतयोद्विग्नस्तत्याजाप्सरसोऽपि सः ॥७॥

L has 1 a 2, (6) 21 a) 1 a 2 7 d R

1 a, धर्म्मं P  b, रोदितः P  2 a, पीडेन L, घीडेन P  b, °भवेत् P  c, अप्रासोद्येन P.  d, ततेमनः P  3 a कामरागैः(ग)प्र° L, °रागैप्र° P.  b, °हाससहो Ga  सत् LP  d, तत्ममृषे  4 b, पुर्व्व P  c, °त्पर्त्तं P.  d °मेयि-यान् P.  5 c d, इवाप्मार्ग्गाद्पम° P  6 b, सद्य L  °भवेत् P  c, मिष्टाद्° J  °द्विरक्तो P.  d, °मातारः P  7 c °तयोद्विमिग्न° P

महतामपि भूतानामावृत्तिरिति चिन्तयन् ।
संवेगाच्च सरागोऽपि वीतराग इवाभवत् ॥८॥
बभूव स हि संवेगः श्रेयसस्तस्य वृद्धये ।
धातुरेधिरिवाख्याते पठितोऽक्षरचिन्तकैः ॥९॥
न तु कामान्मनस्तस्य केनचिज्जगृहे धृतिः ।
त्रिषु कालेषु सर्वेषु निपातोऽस्तिरिव स्मृतः ॥१०॥
खेलगामी महाबाहुर्गजेन्द्र इव निर्मदः ।
सोऽभ्यगच्छद्गुरुं काले विवक्षुर्भावमात्मनः ॥११॥
प्रणम्य च गुरौ मूर्ध्ना बाष्पव्याकुललोचनः ।
कृत्वाञ्जलिमुवाचेदं ह्रिया किंचिदवाङ्मुखः ॥१२॥
अप्सरःप्राप्तये यन्मे भगवन्प्रतिभूरसि ।
नाप्सरोभिर्ममार्थोऽस्ति प्रतिभूत्वं त्यजाम्यहं ॥१३॥
श्रुत्वा ह्यावर्तकं स्वर्गं संसारस्य च चित्रतां ।
न मर्त्येषु न देवेषु प्रवृत्तिर्मम रोचते ॥१४॥
यदि प्राप्य दिवं यत्नान्नियमेन दमेन च ।
अवितृप्ताः पतन्त्यन्ते स्वर्गाय त्यागिने नमः ॥१५॥
अतश्च निखिलं लोकं विदित्वा सचराचरं ।
सर्वदुःखक्षयकरे त्वद्धर्मे परमे रमे ॥१६॥

L has 8 a 1–15 d 8, 16 a 1 b 3 p, b 4 c 3, c 4 d 1 p, d 2 d 8 f

8 a, महा(ह)द्रा(?)मपि L, महाद्रामपि P, C c b, चित्तयत् P d, वीतराग L
9 c, धातोरधिरि° C. 10 a, कामोत्मन° P, कामात्मन° C b, धृति P
11 d, °मात्मानः P 12 a, गुरोर्मूर्ध्ना P 13 b, °भूरपि P. 14 a, श्रुत्वा-
श्रुवर्त्तक P b, चित्रता P 15 a, यत्नान्नि° P d नमुः P

तस्माद्व्यासमासाभ्यां तन्मे व्याख्यातुमर्हसि ।
यच्छ्रुत्वा शृण्वतां श्रेष्ठ परमं प्राप्नुयां पदं ॥१७॥
ततस्तस्याशयं ज्ञात्वा विपक्षाणीन्द्रियाणि च ।
श्रेयश्चैवामुखीभूतं निजगाद तथागतः ॥१८॥
अहो प्रत्यवमर्शोऽयं श्रेयसस्ते पुरोजवः ।
अरण्यां मथ्यमानायामग्नेर्धूम इवोत्थितः ॥१९॥
चिरमुन्मार्गविहृतो लोलैरिन्द्रियवाजिभिः ।
अवतीर्णोऽसि पन्थानं दिष्ट्या दृष्ट्याविमूढया ॥२०॥
अद्य ते सफलं जन्म लाभोऽद्य सुमहांस्तव ।
यस्य कामरसज्ञस्य नैष्क्रम्यायोत्सुकं मनः ॥२१॥
लोकेऽस्मिन्नालयारामे निवृत्तौ दुर्लभा रतिः ।
व्यथन्ते ह्यपुनर्भावात्प्रपातादिव बालिशाः ॥२२॥
दुःखं न स्यात्सुखं मे स्यादिति प्रयतते जनः ।
अत्यन्तदुःखोपरमं सुखं तच्च न बुध्यते ॥२३॥
अरिभूतेष्वनित्येषु सततं दुःखहेतुषु ।
कामादिषु जगत्सक्तं न वेत्ति सुखमव्ययं ॥२४॥

L has 17 a 1-a 2 p, a 3 a 6, a 7 b 3 f, b 4-b 8, c 1 c 3 f, c 4 c 7, 18 a 8 b 1 f, b 4 b 8 f, c 1 19 a 8, b 1 b 2 f, 20 a 1 f, d 7-21 a 1 f, d 4 d 6 f, 22 a 1-a 2 f, a 3, (fol. 21 b) 22 a 4 a 5 a 6-l 8 p

17 a, व्याससमा(मा)साभ्यां P. c, शृण्वताम्श्रेष्ठ P d, प्राप्नपापदं P. 18 b, °न्द्रि-याणिच P 19 a, प्रत्यवमर्षो P c मथ्यमाना° P 20 a, चिरमुन्मार्ग-विहृतो P.; G c 22 a, °स्मिन्नारयारामे P d, बालिशाः(ः) P 24 a, °नि-त्येषु P. c, कामादिषु PC J c

सर्वदुःखापहं तत्तु हस्तस्थममृतं तव ।
विषं पीत्वा यदगदं समये पातुमिच्छसि ॥२५॥
अनर्हसंसारभयं मानार्हं ते चिकीर्षितं ।
रागाग्निस्तादृशो यस्य धर्मोन्मुख पराङ्मुखः ॥२६॥
रागोद्दामेन मनसा सर्वथा दुष्करा धृतिः ।
सदोषं सलिलं दृष्ट्वा पथिनेव पिपासुना ॥२७॥
ईदृशी नाम बुद्धिस्ते निरुद्धा रजसाभवत् ।
रजसा चण्डवातेन विवस्वत इव प्रभा ॥२८॥
सा जिघांसुस्तमो हार्दं या संप्रति विजृम्भते ।
तमो नैशं प्रभा सौरी विनिर्गीर्णेव मेरुणा ॥२९॥
युक्तरूपमिदं चैव शुद्धसत्त्वस्य चेतसः ।
यत्ते स्यान्नैष्ठिके सूक्ष्मे श्रेयसि श्रद्दधानता ॥३०॥
धर्मच्छन्दमिमं तस्माद्विवर्धयितुमर्हसि ।
सर्वधर्मा हि धर्मज्ञ नियमाच्छन्दहेतवः ॥३१॥
सत्यां गमनबुद्धौ हि गमनाय प्रवर्तते ।
शय्याबुद्धौ च शयनं स्थानबुद्धौ तथा स्थितिः ॥३२॥
अन्तर्भूमिगतं ह्यम्भः श्रद्दधाति नरो यदा ।
अर्थित्वे सति यत्नेन तदा खनति गामिमां ॥३३॥

L has 25 b 3 b 5 p c 3 f c 4–c 5 p, c 6 26 a 7, a 8–c 2 p, c 3–c 6 f, c 7–c 8 p, d 1–d 3 27 a 1 f a 6 a 8 f b 1–b 2 p, b 3 b 6, b 7–c 1 f, c 3 p, c 4–c 8, d 1 d 4 f, d 5 p d 6 d 7, 28 a 1 a 4 f, b 8 f, c 4 d 1 f, d 2 31 d 1, d 2–d 3 p, d 4–33 d 8

25 a तन्तु P d, यातुमि॰ P 26 d, धर्म्मोन्मुखपराङ्मुखः P 27 a, रागोद्दामन P, Cc b, दुष्करा L, दुष्ट्करा P d, पथिनेच P 28 b, ॰भवेत् L d, प्रभाः LP 29 a, ॰सुस्तमो P 30 a, युक्तरूप॰ P 31 b ॰वर्द्धयितुम॰ P 32 c, शर्य्याबुद्धौ P d स्थानबुद्धे P 33 a ह्यम्भ LP

नार्थी यद्यग्निना वा स्याच्छ्रद्दध्यात्तं न वारणौ ।
मथ्नीयान्नारणिं कश्चित्तद्भावे सति मथ्यते ॥३४॥
सस्योत्पत्तिं यदि न वा श्रद्दध्यात्कार्षकः क्षितौ ।
अर्थी सस्येन वा न स्याद्बीजानि न वपेद्भुवि ॥३५॥
अतश्च हस्त इत्युक्ता मया श्रद्धा विशेषतः ।
यस्माद्गृह्णाति सद्धर्मं दायं हस्त इवाक्षतः ॥३६॥
प्राधान्यादिन्द्रियमिति स्थिरत्वाद्बलमित्यतः ।
गुणदारिद्र्यशमनाद्धनमित्यभिवर्णिता ॥३७॥
रक्षणार्थेन धर्मस्य तथेषीकेत्युदाहृता ।
लोकेऽस्मिन्दुर्लभत्वाच्च रत्नमित्यभिभाषिता ॥३८॥
पुनश्च बीजमित्युक्ता निमित्तं श्रेयसोत्पदा ।
पावनार्थेन पापस्य नदीत्यभिहिता पुनः ॥३९॥
यस्माद्धर्मस्य चोत्पत्तौ श्रद्धा कारणमुत्तमं ।
मयोक्ता कार्यतस्तस्मात्तत्र तत्र तथा तथा ॥४०॥
श्रद्धाङ्कुरमिमं तस्मात्संवर्धयितुमर्हसि ।
तद्वृद्धौ वर्धते धर्मो मूलवृद्धौ यथा द्रुमः ॥४१॥
व्याकुलं दर्शनं यस्य दुर्बलो यस्य निश्चयः ।
*तस्य पारिप्लवा श्रद्धा न हि कृत्याय वर्तते ॥४२॥*

L has 34 a 1-42 b 7, (fol 22 a) 42 b 8-d 8

34 b, चारणौ P c, °मारणि P 35 b, °ध्यात्कार्षक° L d, वपेद्भुवि P
36 c, °गृह्णाति L and apparently I 38 b तथेषीके° P, L has षी very like षी
39 b श्रेयसोयदा I PC यत. ll c, पावनार्थेन P 41 b, °वर्धयितुम° I I
42 c, पारिप्रवा I

यावत्तत्त्वं न भवति हि दृष्टं श्रुतं वा
तावच्छ्रद्धा न भवति बलस्था स्थिरा वा ।
दृष्टे तत्त्वे नियमपरिभूतेन्द्रियस्य
श्रद्धावृक्षो भवति सफलश्चाश्रयश्च ॥४३॥

सौन्दरनन्दे महाकाव्ये प्रत्यवमर्शो नाम द्वादशः सर्गः ।

L has all.

43 a, यावत्तंनभवति P c, मियमपिरि° P. d, °श्रयश्चेति LP. col., सौन्द-रा° P. प्रत्यक्षमशो P.

# CANTO XIII

अथ संराधितो नन्दः श्रद्धां प्रति महर्षिणा ।
परिषिक्तोऽमृतेनेव युयुजे परया मुदा ॥१॥
कृतार्थमिव तं मेने संबुद्धः श्रद्धया तया ।
मेने प्राप्तमिव श्रेयः स च बुद्धेन संस्कृतः ॥२॥
श्लक्ष्णेन वचसा कांश्चित्कांश्चित्परुषया गिरा ।
कांश्चिदाभ्यामुपायाभ्यां स विनिन्ये विनायकः ॥३॥
पांसुभ्यः काञ्चनं जातं विशुद्धं निर्मलं शुचि ।
स्थितं पांसुष्वपि यथा पांसुदोषैर्न लिप्यते ॥४॥
पद्मपर्णं यथा चैव जले जातं जले स्थितं ।
उपरिष्टादधस्ताद्वा न जलेनोपलिप्यते ॥५॥
तद्वल्लोके मुनिर्जातो लोकस्यानुग्रहं चरन् ।
कृतित्वान्निर्मलत्वाच्च लोकधर्मैर्न लिप्यते ॥६॥
श्लेषं त्यागं प्रियं रूक्षं कथां च ध्यानमेव च ।
मन्तुकाले चिकित्सार्थं चक्रे नात्मानुवृत्तये ॥७॥

L has all

1 b, P om इ d, युयुञ्ज P 3 a l, काश्चित्काश्चित्पुरुषया P, °त्काश्चित्प° L. c, काश्चि° LP. °मुपायाभ्यो P. 4 a, पांसुत्यःकारे (or चे) णं P, काचनं L. d, पांसुदोषेन्न P. 5 a, °पर्णं P 6 a, मुनिज्ञातो P b, °नुग्रंहंचरत् L, चरत् P. c, कृतित्वानि° P 7 a, श्लक्ष्ण P c, मन्तु (or मन) कारे P. मन्तकाले C.

अतश्च संदधे कायं महाकरुणया तया ।
मोचयेयं कथं दुःखात्सत्त्वानीत्यनुकम्पकः ॥८॥
अथ संहर्षणाच्छन्दं विदित्वा भाजनीकृतं ।
अब्रवीद्बुवतां श्रेष्ठः क्रमज्ञः श्रेयसां क्रमं ॥९॥
अतःप्रभृति भूयस्त्वं श्रद्धेन्द्रियपुरःसरः ।
अमृतस्याप्तये सौम्य वृत्तं रक्षितुमर्हसि ॥१०॥
प्रयोगः कायवचसोः शुद्धो भवति ते यथा ।
उत्तानो विवृतो गुप्तोऽनवच्छिद्रस्तथा कुरु ॥११॥
उत्तानो भावकरणाद्विवृतश्चाप्यगूहनात् ।
गुप्तो रक्षणतात्पर्यादच्छिद्रश्चानवद्यतः ॥१२॥
शरीरवचसोः शुद्धौ सप्ताङ्गे चापि कर्मणि ।
आजीवसमुदाचार शौचात्संस्कर्तुमर्हसि ॥१३॥
दोषानां कुहनादीनां पञ्चानामनिषेवणात् ।
त्यागाच्च ज्योतिषादीनां चतुर्णां वृत्तिघातिनां ॥१४॥
प्राणिधान्यधनादीनां वर्ज्यानामप्रतिग्रहात् ।
भैक्षाङ्गानां निसृष्टानां नियतानां प्रतिग्रहात् ॥१५॥
परितुष्टः शुचिर्मञ्जुश्चौक्ष्या जीवसंपदा ।
कुर्या दुःखप्रतीकार यावदेव विमुक्तये ॥१६॥

L has 8 a 1 12 b 8 c 1 c 8 p d 1 d 5 d 6 p 13 a 3 p a 4 b 4 b 5 b 8 p c 1–c 2 f d 1 d 2 f d 3 d 8 p 14 a 1 d 8 15 a 1 a 4 p a 5 b 1 f b 2 b 5 p 16 b 3 b 4 f

8 a काय P c मोचयेय L 9 l भाजनाकृत P c, अब्रवीत्तु॰ P 11 a ॰वचसो P 12 a ॰करणोद्वि॰ P b ॰प्यभूहनात् P ॰प्यगू (or भू or गूं) हनात् L d ॰द्दचिद्रया॰ P 13 a शरवचसो P d शौ(शो)चा॰ P 14 b पचानामणिषे॰ P 15 a प्राणिघात॰ G b ॰प्रतिगर्हात् P c भैचाङ्गाना P 16 a ॰तुष्ट P c कुर्य्याद्दु॰ IC

कर्मणो हि यथादृष्टात्कायवाक्प्रभवादपि ।
आजीवः पृथगेवोक्तो दुःशोधत्वादयं मया ॥१७॥
गृहस्थेन हि दुःशोधा दृष्टिर्विविधदृष्टिना ।
आजीवो भिक्षुणा चैव परेष्वायत्तवृत्तिना ॥१८॥
एतावच्छीलमित्युक्तमाचारोऽयं समासतः ।
अस्य नाशेन नैव स्यात्प्रव्रज्या न गृहस्थता ॥१९॥
तस्माच्चारित्रसंपन्नो ब्रह्मचर्यमिदं चर ।
अणुमात्रेष्ववद्येषु भयदर्शी दृढव्रतः ॥२०॥
शीलमास्थाय वर्तन्ते सर्वा हि श्रेयसि क्रियाः ।
स्थानाद्यानीव कार्याणि प्रतिष्ठाय वसुन्धरां ॥२१॥
मोक्षस्योपनिषत्सौम्य वैराग्यमिति गृह्यतां ।
वैरागस्यापि संवेदः संविदो ज्ञानदर्शनं ॥२२॥
ज्ञानस्योपनिषच्चैव समाधिरुपधार्यतां ।
समाधेरप्युपनिषत्सुखं शारीरमानसं ॥२३॥
प्रश्रब्धिः कायमनसः सुखस्योपनिषत्परा ।
प्रश्रब्धेरप्युपनिषत्प्रीतिरप्यवगम्यतां ॥२४॥
तथा प्रीतेरुपनिषत्प्रामोद्यं परमं मतं ।
प्रामोद्यस्याप्यहृल्लेखः कुकृतेष्वकृतेषु वा ॥२५॥

L has 17 a 4–a 6 p, b 2–b 6 p, (fol 22 b) 17 b 7–d 5, d 6–d 8 p, 18 a 1–a 4 f, 20 c 1–c 2 f, d 2–d 4 f, d 5–21 c 6, c 7–d 2 p, d 3 d 8, 22 a 1–a 3 f, b 5 c 1 f, c 7–d 4 p, d 8–23 a 1, a 3 a 5 f, c 4–c 8 f, d 1 d 2 p, d 3 25 d 8

17 a, यथा दुष्टा° C.  c, °वोक्ता P  18 d, °वृर्त्तिना P  19 c, नासेन P. d, °भर्यामदहस्थता P, G.c  20 a, °सपन्नो P.  d, °दर्शीदृढव्रतः P.  21 a, वसुन्धरा P.  22 b, गुह्यता P.  c, संवेगः LPC, H and Gu c.  23 b, °वार्य्यतां P.  24 a, प्रस्रब्धिः L, प्रस्रद्धिः P  °मनसोः G  c, प्रस्रब्धेर° L, प्रस्रथे(?)ब्धे(?)रप्यु° P.  25 c, °ल्लेखेः P

अहृल्लेखस्य मनसः शीलं तूपनिषच्छुचि ।
अतः शीलं नयत्यग्र्यमिति शीलं विशोधय ॥२६॥
शीलनाच्छीलमित्युक्तं शीलनं सेवनादपि ।
सेवनं तन्निदेशाच्च निदेशश्च तदाश्रयात् ॥२७॥
शीलं हि शरणं सौम्य कान्तार इव दैशिकः ।
मित्रं बन्धुश्च रक्षा च धनं च बलमेव च ॥२८॥
यतः शीलमतः सौम्य शीलं संस्कर्तुमर्हसि ।
एतत्स्थानमथान्ये च मोक्षारम्भेषु योगिनां ॥२९॥
ततः स्मृतिमधिष्ठाय चपलानि स्वभावतः ।
इन्द्रियाणीन्द्रियार्थेभ्यो निवारयितुमर्हसि ॥३०॥
भेतव्यं न तथा शत्रोर्नाग्नेर्नाहेर्न चाशनेः ।
इन्द्रियेभ्यो यथा स्वेभ्यस्तैरजस्रं हि हन्यते ॥३१॥
द्विषद्भिः शत्रुभिः कश्चित्कदाचित्पीड्यते न वा ।
इन्द्रियैर्बाध्यते सर्वः सर्वत्र च सदैव च ॥३२॥
न च प्रयाति नरकं शत्रुप्रभृतिभिर्हतः ।
कृष्यते तत्र निघ्नस्तु चपलैरिन्द्रियैर्हतः ॥३३॥
हन्यमानस्य तैर्दुःखं हार्दं भवति वा न वा ।
इन्द्रियैर्बाध्यमानस्य हार्दं शारीरमेव च ॥३४॥

L has all

26 a, चविलेखस्य LPC, J.c. c, नयत्यग्रगामि° P. d, शास्त्रं P. 27 b, शीलणात् LPC; H c. c, सेवनात् LPC H.c. d, निर्देशाच्च LPC. 29 a, °तस्सौम्य LP. b, संस्कातुम° P. c, एतत्स्थामतयान्ये P. 31 a b, शत्रोर्नाग्नेर्ना° P. c, स्तेभ्य° P. 32 a, द्विषद्भि P. c, इन्द्रियैर्वा° P. 33 c, निग्रंस्तु P. 34 d, हार्द्दं P.

संकल्पविषदिग्धा हि पञ्चेन्द्रियमयाः शराः ।
चिन्तापुङ्खा रतिफला विषयाकाशगोचराः ॥३५॥

मनुष्यहरिणान् घ्नन्ति कामव्याधेरिता हृदि ।
विहन्यन्ते यदि न ते ततः पतन्ति तैः क्षताः ॥३६॥

नियमाजिरसंस्थेन धैर्यकार्मुकधारिणा ।
निपतन्तो निवार्यास्ते महता स्मृतिवर्मणा ॥३७॥

इन्द्रियाणामुपशमादरीणां निग्रहादिव ।
सुखं स्वपिति वास्ते वा यत्र तत्र गतोद्भवः ॥३८॥

तेषां हि सततं लोके विषयानभिकाङ्क्षतां ।
संविन्नैवास्ति कार्पण्याच्छुनामाशावतामिव ॥३९॥

विषयैरिन्द्रियग्रामो न तृप्तिमधिगच्छति ।
अजस्रं पूर्यमाणोऽपि समुद्रः सलिलैरिव ॥४०॥

अवश्यं गोचरे स्वे स्वे वर्तितव्यमिहेन्द्रियैः ।
निमित्तं तत्र न ग्राह्यमनुव्यञ्जनमेव च ॥४१॥

आलोक्य चक्षुषा रूपं धातुमात्रे व्यवस्थितः ।
स्त्री वेति पुरुषो वेति न कल्पयितुमर्हसि ॥४२॥

सचेत्स्त्रीपुरुषग्राहः क्वचिद्विद्येत कश्चन ।
शुभतः केशदन्तादीन्नानुप्रस्थातुमर्हसि ॥४३॥

L has 35 a 1 37 a 7. (f. L̊ 23 a) 37 a 8 43 d 8

35 b, °मयाम्रराः LP c, चिन्तायुखा P d, °कासगोघराः P 36 a, °हरिर्यांधेर्भित P. d, ति.घत: LP, Cc 37 d, महतो P. 38 b, निग्र्वहा° L. d, गतोधव: P 39 d, °च्छुनामासाव° P 40 d, समुद्रयलिसि° P. 41 a, गोघरैस्वैस्वैर्ख° L, गोघरैस्स्वैस्वैवर्त्ति° P, Gc 42 a, भालोक्य L. d, कल्पयतिम° P. 43 a, °याहो P b, °येतक्तकयन P

नापनेयं ततः किंचित्प्रक्षेप्यं नापि किंचन ।
द्रष्टव्यं भूततो भूतं यादृशं च यथा च यत् ॥४४॥
एवं ते पश्यतस्तत्त्वं शश्वदिन्द्रियगोचरे ।
भविष्यति पदस्थानं नाभिध्यादौर्मनस्ययोः ॥४५॥
अभिध्या प्रियरूपेण हन्ति कामात्मकं जगत् ।
अरिर्मित्रमुखेनेव प्रियवाक्कलुषाशयः ॥४६॥
दौर्मनस्याभिधानस्तु प्रतिघो विषयाश्रितः ।
मोहाद्येनानुवृत्तेन परत्रेह च हन्यते ॥४७॥
अनुरोधविरोधाभ्यां शीतोष्णाभ्यामिवार्दितः ।
शर्म नाप्नोति न श्रेयश्चलेन्द्रियमतो जगत् ॥४८॥
नेन्द्रियं विषये तावत्प्रवृत्तमपि सज्जते ।
यावन्न मनसस्तत्र परिकल्पः प्रवर्तते ॥४९॥
इन्धने सति वायौ च यथा ज्वलति पावकः ।
विषयात्परिकल्पाच्च क्लेशाग्निर्जायते तथा ॥५०॥
अभूतपरिकल्पेन विषयस्य हि बध्यते ।
तमेव विषयं पश्यन् भूततः परिमुच्यते ॥५१॥
दृष्ट्वैकं रूपमन्यो हि रज्यतेऽन्यः प्रदुष्यति ।
कश्चिद्भवति मध्यस्थस्तत्रैवान्यो घृणायते ॥५२॥

L has 44 a 1 49 c 2 c 3–d 1 p, d 2 50 b 3 b 4–c 2 p, c 3 52 a 1, a 2–a 8 p, b 1–b 3 f, b 4–c 1 p, d 6–d 8 f.

44 a b, किंचिप्र॰ P. 45 a, एवंतपश्यतस्त॰ P. d, ॰दौमन॰ P. 47 a, ॰स्ताभिधानस्तु P d, परत्रेहर P. 48 d, ॰यलन्द्रिय॰ P. 49 a, नन्द्रियं॰ P. c, मनेसस॰ P. 50 c, ॰कल्पेच P d, तधा P 52 a, दृष्टैकरूपेम॰ P. b, मज्यतेऽन्य P. c, मुधस्त॰ P

अतो न विषयो हेतुर्बन्धाय न विमुक्तये ।
परिकल्पविशेषेण संगो भवति वा न वा ॥५३॥
कार्यः परमयत्नेन तस्मादिन्द्रियसंवरः ।
इन्द्रियाणि ह्यगुप्तानि दुःखाय च भवाय च ॥५४॥
तस्मादेषामकुशलकराणामरीणां
चक्षुर्घ्राणश्रवणरसनस्पर्शनानां ।
सर्वावस्थं भव विनियमादप्रमत्तो
मास्मिन्नर्थे क्षणमपि कृथास्त्वं प्रमादं ॥५६॥

सौन्दरनन्दे महाकाव्ये शीलेन्द्रियजयो नाम त्रयोदशः सर्गः ।

L has 53 a 7-b 7 f, b 8-c 2, 54 a 7-b 1 f, b 2-b 3 p, b 4-d 8, 56 b 13 f, b 14-c 2, c 7-c 10 f, (fol. 23 b) 56 c 11-d 14. For verse 55 of which L has a 1-a 4, a 5-a 6 p, a 7-a 8 f see notes.

53 a, P om. प; C.c. d, संयोग P; C.c. 56 b, चत्तुर्माण° P. c, भवतिनियमाद्° PC, L unc d, मास्मिन्नेचणेमपि P. col, सौन्दरा° P.

## CANTO XIV

अथ स्मृतिकवाटेन पिधायेन्द्रियसंवरं ।
भोजने भव मात्राज्ञो ध्यानायानामयाय च ॥१॥
प्राणापानौ निगृह्णाति ग्लानिनिद्रे प्रयच्छति ।
कृतो ह्यत्यर्थमाहारो विहन्ति च पराक्रमं ॥२॥
यथा चात्यर्थमाहारः कृतोऽनर्थाय कल्पते ।
उपयुक्तस्तथात्यल्पो न सामर्थ्याय कल्पते ॥३॥
आचयं द्युतिमुत्साहं प्रयोगं बलमेव च ।
भोजनं कृतमत्यल्पं शरीरस्यापकर्षति ॥४॥
यथा भारेण नमते लघुनोन्नमते तुला ।
समा तिष्ठति युक्तेन भोज्येनेयं तथा तनुः ॥५॥
तस्मादभ्यवहर्तव्यं स्वशक्तिमनुपश्यता ।
नातिमात्रं न चात्यल्पं मेयं मानवशादपि ॥६॥
अत्याक्रान्तो हि कायाग्निर्गुरुणान्नेन शाम्यति ।
अवच्छन्न इवाल्पोऽग्निः सहसा महतेन्धसा ॥७॥

L has 2 c 5 p, c 6–c 7, c 8–d 1 f, d 4–d 8 f, 3 a 1–c 8, d 1–d 7 f, d 8–4 a 2, a 3 a 4 p, c 1–c 3 f, d 2–5 a 1 f, a 2–a 4, a 7–b 1 f, d 2–d 6 f, d 7–7 c 8, d 1–d 4 p, d 5–d 8.

1 b, °न्द्रियेसधर P. c, मधिघो P, Oc. 3 a, °र्थमाहर: LP. 4 a, धुतिमुत्साई P. 6 a, तस्मादेभ्य° P. c, नातिमात्स्रं P. 7 a, °चःत्याक्रान्तो P. b, शाम्यहि P. c, इपात्योपिः P. d, महतेमसो P.

अत्यन्तमपि संहारो नाहारस्य प्रशस्यते ।
अनाहारो हि निर्वाति निरिन्धन इवानलः ॥८॥
यस्मान्नास्ति विनाहारात्सर्वप्राणभृतां स्थितिः ।
तस्माद्दुष्यति नाहारो विकल्पोऽत्र तु वार्यते ॥९॥
न ह्येकविषयेऽन्यत्र सज्यन्ते प्राणिनस्तथा ।
अविज्ञाते यथाहारे बोद्धव्यं तत्र कारणं ॥१०॥
चिकित्सार्थं यथा धत्ते व्रणस्यालेपनं व्रणी ।
क्षुद्विघातार्थमाहारस्तद्वत्सेव्यो मुमुक्षुणा ॥११॥
भारस्योद्वहनार्थं च रथाक्षोऽभ्यज्यते यथा ।
भोजनं प्राणयात्रार्थं तद्वद्विद्वान्निषेवते ॥१२॥
समतिक्रमणार्थं च कान्तारस्य यथाध्वगौ ।
पुत्रमांसानि खादेतां दम्पती भृशदुःखितौ ॥१३॥
एवमभ्यवहर्तव्यं भोजनं प्रतिसंख्यया ।
न भूषार्थं न वपुषे न मदाय न दृप्तये ॥१४॥
धारणार्थं शरीरस्य भोजनं हि विधीयते ।
उपस्तम्भः पिपतिषोर्दुर्बलस्येव वेश्मनः ॥१५॥
प्लवं यत्नाद्यथा कश्चिद्बध्नीयाद्धारयेदपि ।
न तत्स्नेहेन यावत्तु महौघस्योत्तितीर्षया ॥१६॥

L has 8 a 1 a 3, a 4 b 3 f, b 4–d 3, d 4–16 d 8

8 b, नाहोरेस्य P. d, निरिम्रन P 9 a b, °हारोत्सर्वमाणभूता P. c, तस्मा-द्रुष्यति P d, विकल्पोतु (or ल्प ?) तु L, °ल्पत्त P 10 b, सज्येते P d पोद्धव्यं (? or ध्यं) P. 11 a, °त्सार्थ P b, प्रणस्यालिमर्णं P d, ममक्षुया P 13 a, समभि-क्रमणार्थं P. b, यथाध्वगो LP. 14 a, एवम° P d, नमदाय P. 15 a, °णा-र्थसरी° P. d, °र्दुर्बलस्येव L. °दुर्बलस्येव P 16 b, °द्धायेदपि P. c, यावत्तु L. तत्स्नेहेनयावत्त P

तथोपकरणैः कायं धारयन्ति परीक्षकाः ।
न तत्स्नेहेन यावत्तु दुःखौघस्य तितीर्षया ॥१७॥
शोचता पीड्यमानेन दीयते शत्रवे यथा ।
न भक्त्या नापि तर्षेण केवलं प्राणगुप्तये ॥१८॥
योगाचारस्तथाहारं शरीराय प्रयच्छति ।
केवलं क्षुद्विघातार्थं न रागेण न भक्तये ॥१९॥
मनोधारणया चैव परिणाम्यात्मवानहः ।
विधूय निद्रां योगेन निशामप्यतिनामयेः ॥२०॥
हृदि यत्संज्ञिनश्चैव निद्रा प्रादुर्भवेत्तव ।
गुणवत्संज्ञितां संज्ञां तदा मनसि मा कृथाः ॥२१॥
धातुरारम्भधृत्योश्च स्थामविक्रमयोरपि ।
नित्यं मनसि कार्यस्ते बाध्यमानेन निद्रया ॥२२॥
आम्नातव्याश्च विशदं ते धर्मा ये परिश्रुताः ।
परेभ्यश्चोपदेष्टव्याः संचिन्त्याः स्वयमेव च ॥२३॥
प्रक्लेद्यमद्भिर्वदनं विलोक्याः सर्वतो दिशः ।
चार्या दृष्टिश्च तारासु जिजागरिषुणा सदा ॥२४॥
अन्तर्गतैरचपलैर्वशस्थायिभिरिन्द्रियैः ।
अविक्षिप्तेन मनसा चंक्रम्यस्वास्व वा निशि ॥२५॥

L has 17 a 1–20 a 1, (fol. 24 a) 20 a 2–25 d 8.

17 c, यावत्तु P. d, दुःखौघस्य LP. 19 b, शरीरय LP. c, चद्विघातार्थं P.
20 d, °नामयेत् L, °नाम्ययेत् P. 21 c, गुणवेत्सं° P. 22 a, °रंभधृत्योश्च P.
24 b, विलोक्या:(क्याः) L, विलोक्याः P. 25 a, ममार्गतैरचप° P. b, °स्थापिभिरि-
न्द्रियैः P.

भये प्रीतौ च शोके च निद्रया नाभिभूयते ।
तस्मान्निद्राभियोगेषु सेवितव्यमिदं त्रयं ॥२६॥
भयमागमनान्मृत्योः प्रीतिं धर्मपरिग्रहात् ।
जन्मदुःखादपर्यन्ताच्छोकमागन्तुमर्हसि ॥२७॥
एवमादि क्रमः सौम्य कार्यो जागरणं प्रति ।
वन्ध्यं हि शयनादायुः कः प्राज्ञः कर्तुमर्हति ॥२८॥
दोषव्यालानतिक्रम्य व्यालान् गृहगतानिव ।
क्षमं प्राज्ञस्य न स्वप्तुं निस्तितीर्षोर्महद्भयं ॥२९॥
प्रदीप्ते जीवलोके हि मृत्युव्याधिजराग्निभिः ।
कः शयीत निरुद्वेगः प्रदीप्त इव वेश्मनि ॥३०॥
तस्मात्तम इति ज्ञात्वा निद्रां नावेष्टुमर्हसि ।
अप्रशान्तेषु दोषेषु सशस्त्रेष्विव शत्रुषु ॥३१॥
पूर्वं यामं त्रियामायाः प्रयोगेणातिनाम्य तु ।
सेव्या शय्या शरीरस्य विश्रामार्थं स्वतन्त्रिणा ॥३२॥
दक्षिणेन तु पार्श्वेन स्थितयालोकसंज्ञया ।
प्रबोधं हृदये कृत्वा शयीथाः शान्तमानसः ॥३३॥
यामे तृतीये चोत्थाय चरन्नासीन एव वा ।
भूयो योगं मनःशुद्धौ कुर्वीथा नियतेन्द्रियः ॥३४॥

L has 26 a 1–31 c 1, c 2–d 2 f, d 3–32 a 8, b 1 b 6 p, b 7 33 d 3 d 4 34 a 5 p, a 6, a 7–b 6 f, d 2 f

26 b, नातिभूयते P 27 a, °गमनान्मृ° P b, प्रीति P which omits प d, °मार्गं(?)न्तमर्हसि LP, C c 28 c, वध्य P d, के: P. कत्तुंम° P 29 a and b, व्याडा° LP 31 b, नावेपुर्म(म)र्हं°P c, दोपेपु P 32 a, पुर्व P c, शर्य्या P. d, °मार्थं P मतन्त्रिणा LP, °मतन्द्रिणा C 33 a, पार्श्वेण P. c, प्रबोध P. हृदयं LPC, H c d, शान्तिमानसः LPC, G c 34 a, याम्य P. चोर्थाय P c, योगमनशुद्धौ P, मनःशुद्धि G d °तेन्द्रियेः P.

अथासनगतस्थानप्रेक्षितव्याहृतादिषु ।
संप्रजानन् क्रियाः सर्वाः स्मृतिमाधातुमर्हसि ॥३५॥
द्वाराध्यक्ष इव द्वारि यस्य प्रणिहिता स्मृतिः ।
धर्षयन्ति न तं दोषाः पुरं गुप्तमिवारयः ॥३६॥
न तस्योत्पद्यते क्लेशो यस्य कायगता स्मृतिः ।
चित्तं सर्वास्ववस्थासु बालं धात्रीव रक्षति ॥३७॥
शरव्यः स तु दोषाणां यो हीनः स्मृतिवर्मणा ।
रणस्थः प्रतिशत्रूणां विहीन इव वर्मणा ॥३८॥
अनाथं तन्मनो ज्ञेयं यत्स्मृतिर्नाभिरक्षति ।
निर्णेता दृष्टिरहितो विषमेषु चरन्निव ॥३९॥
अनर्थेषु प्रसक्ताश्च स्वार्थेभ्यश्च पराङ्मुखाः ।
यद्भये सति नोद्विग्नाः स्मृतिनाशोऽत्र कारणं ॥४०॥
स्वभूमिषु गुणाः सर्वे ये च शीलादयः स्थिताः ।
विकीर्णा इव गा गोपः स्मृतिस्ताननुगच्छति ॥४१॥
प्रनष्टममृतं तस्य यस्य विप्रसृता स्मृतिः ।
हस्तस्थममृतं तस्य यस्य कायगता स्मृतिः ॥४२॥
आर्यो न्यायः कुतस्तस्य स्मृतिर्यस्य न विद्यते ।
यस्यार्यो नास्ति च न्यायः प्रनष्टस्तस्य सत्पथः ॥४३॥

L has 35 a 1 a 8 f, b 1 b 3, b 5-b 7 f, d 6-36 a 3 f, a 4-d 8, 37 a 1-a 3 f, 39 b 8-c 6 f. (fol 24 b) 39 c 7 40 b 1, b 2-b 4 p, b 5-b 8 f, 43 a 1-d 3, d 4-d 8

35 a, °स्थाने° P c, °आगतक्रियाः P. 36 a, द्वाराध्यषि P. 37 d, धारं(m) P. 39 a, तन्मनो P. d, विषयेषु LPC; G c 40 b, न्यार्थेभ्यश्च L. 41 b, शीला-दय P. c, गोपः P 43 a, कुटस्थस्य P.

प्रनष्टो यस्य सन्मार्गो नष्टं तस्यामृतं पदं ।
प्रनष्टममृतं यस्य स दुःखान्न विमुच्यते ॥४४॥

तस्माच्चरन् चरोऽस्मीति स्थितोऽस्मीति च धिष्ठितः ।
एवमादिषु कालेषु स्मृतिमाधातुमर्हसि ॥४५॥

योगानुलोमं विजनं विशब्दं शय्यासनं सौम्य तथा भजस्व ।
कायस्य कृत्वा हि विवेकमादौ सुखोऽधिगन्तुं मनसो विवेकः ॥४६॥

अलब्धचेतःप्रशमः सरागो यो न प्रचारं भजते विविक्तं ।
स क्षण्यते ह्यप्रतिलब्धमार्गश्चरन्निवोर्व्यां बहुकण्टकायां ॥४७॥

अदृष्टतत्त्वेन परीक्षकेण स्थितेन चित्रे विषयप्रचारे ।
चित्तं निषेद्धुं न सुखेन शक्यं कृष्टादको गौरिव सस्यमध्यात् ॥४८॥

अनीर्यमाणस्तु यथानिलेन प्रशान्तिमागच्छति चित्रभानुः ।
अल्पेन यत्नेन तथा विविक्तेष्वघट्टितं शान्तिमुपैति चेतः ॥४९॥

क्वचिद्भुक्त्वा यत्तद्वसनमपि यत्तत्परिहितो
वसन्नात्मारामः क्वचन विजने योऽभिरमते ।
कृतार्थः स ज्ञेयः शमसुखरसज्ञः कृतमतिः
परेषां संसर्गं परिहरति यः कण्टकमिव ॥५०॥

L has 44 a 1 a 2 p, a 3 a 5 f, a 7–a 8 f, d 4 45 a 2 f, a 3 a 5 d 6 d 8 p, 46 a 1 47 b 9, b 10 c 6 f, c 7 d 9 d 10 48 a 8 f, a 9 b 1 p, b 2 50 d 17

44 b तस्समृत P 45 a, तस्माश्चर LP चराश्मी° P b, धितिष्टतः P
46 a, विजन P b शर्य्यास° I, शर्यास° P, Cc d, °विगन्तु P 47 b, विविच P
c d, °मार्ग्गश्चरन्निवोर्व्या P 48 a, परीचयेन P c, निषेत्तु P सक्यं P d, कृष्टो-
ष्नता Ga. गौरीवसस्य° P. 50 a, यत्तर (or रे) द्वेसनमपि P d, पर(रे)भ्यस्ससंर्ग्गं I, परेभ्यस्ता (?) सर्ग्गं P

यदि द्वन्द्वारामे जगति विषयव्यग्रहृदये
विविक्ते निर्द्वन्द्वो विहरति कृती शान्तहृदयः ।
ततः पीत्वा प्रज्ञारसममृतवत्तृप्तहृदयो
विविक्तः संसक्तं विषयकृपणं शोचति जगत् ॥५१॥

वसञ्शून्यागारे यदि सततमेकोऽभिरमते
यदि क्लेशोत्पादैः सह न रमते शत्रुभिरिव ।
चरन्नात्मारामो यदि च पिबति प्रीतिसलिलं
ततो भुङ्क्ते श्रेष्ठं त्रिदशपतिराज्यादपि सुखं ॥५२॥

सौन्दरनन्दे महाकाव्य आदिप्रस्थानो नाम चतुर्दशः सर्गः ।

L has all.

51 a, °रामै P. °हृदयै P. d, चिवित्तस्ससत्तं P. °कृपनं P. 52 a, वसंमुण्या-गारे L, वसंमुण्यागावे P. c, °सल्लिल P. d, भुक्ति P. सुखमिति LP. col, सौन्द-रा° P. °काव्ये LP. सर्ग्ग P.

## CANTO XV

यत्र तत्र विविक्ते तु बद्ध्वा पर्यङ्कमुत्तमं ।
ऋजुं कायं समाधाय स्मृत्याभिमुखयान्वितः ॥१॥
नासाग्रे वा ललाटे वा भ्रुवोरन्तर एव वा ।
कुर्वीथाश्चपलं चित्तमालम्बनपरायणं ॥२॥
सचेत्कामवितर्कस्त्वां धर्षयेन्मानसो ज्वरः ।
क्षेप्तव्यो नाधिवास्यः स वस्त्रे रेणुरिवागतः ॥३॥
यद्यपि प्रतिसंख्यानात्कामानुत्सृष्टवानसि ।
तमांसीव प्रकाशेन प्रतिपक्षेण ताञ्जहि ॥४॥
तिष्ठत्यनुशयस्तेषां छन्नोऽग्निरिव भस्मना ।
स ते भावनया सौम्य प्रशाम्योऽग्निरिवाम्बुना ॥५॥
ते हि तस्मात्प्रवर्तन्ते भूयो बीजादिवाङ्कुराः ।
तस्य नाशेन ते न स्युर्बीजनाशादिवाङ्कुराः ॥६॥
अर्जनादीनि कामेभ्यो दृष्ट्वा दुःखानि कामिनां ।
तस्मात्तान्मूलतश्छिन्धि मित्रसंज्ञानरीनिव ॥७॥
अनित्या मोषधर्माणो रिक्ता व्यसनहेतवः ।
बहुसाधारणाः कामा बर्ह्या ह्याशीविषा इव ॥८॥

L has 1 a 1 2 a 2, (fol 25 a) 2 a 3 8 d 8

1 a, P om तु  b, पद्धा P.  2 a, नास्र्यं(?)ग्रे(मा(?)य) L.  3 a, °तर्कस्त्वा P. b, प्यनः P  d, वस्तुरेणरिवा° P  4 b °मानुत्सृ(त्सु)प्रवान° P  d, P om प. तांजहि LP.  5 a, °नुशयेस्तेषां P  6 a, तस्मात्प्रवत्तन्ते P  7 a, अर्ज्जना-दीनि P  c, °लतस्छिन्धि P  d °नरीवच P  8 b, °हेतव P  d, बर्ह्या ह्याशी-विषा LP.

ये मृग्यमाणा दुःखाय रक्ष्यमाणा न शान्तये ।
भ्रष्टाः शोकाय महते प्राप्ताश्च न वितृप्तये ॥९॥
तृप्तिं वित्तप्रकर्षेण स्वर्गावाप्त्या कृतार्थतां ।
कामेभ्यश्च सुखोत्पत्तिं यः पश्यति स नश्यति ॥१०॥
चलानपरिनिष्पन्नानसाराननवस्थितान् ।
परिकल्पसुखान् कामान्न तान्स्मर्तुमिहार्हसि ॥११॥
व्यापादो वा विहिंसा वा क्षोभयेद्यदि ते मनः ।
प्रसाद्यं तद्विपक्षेण मणिनेवाकुलं जलं ॥१२॥
प्रतिपक्षस्तयोर्ज्ञेयो मैत्री कारुण्यमेव च ।
विरोधो हि तयोर्नित्यं प्रकाशतमसोरिव ॥१३॥
निवृत्तं यस्य दौःशील्यं व्यापादश्च प्रवर्तते ।
हन्ति पांसुभिरात्मानं स स्नात इव वारणः ॥१४॥
दुःखितेभ्यो हि मर्त्येभ्यो व्याधिमृत्युजरादिभिः ।
आर्यः को दुःखमपरं सघृणो धातुमर्हति ॥१५॥
दुष्टेन चेह मनसा बाध्यते वा परो न वा ।
सद्यस्तु दह्यते तावत्स्वं मनो दुष्टचेतसः ॥१६॥
तस्मात्सर्वेषु भूतेषु मैत्रीं कारुण्यमेव च ।
न व्यापादं विहिंसां वा विकल्पयितुमर्हसि ॥१७॥

L has 9 a 1-12 d 4, d 5 13 b 3 f, b 4 c 5, c 6 f, c 7 c 8, d 1-d 2 f, d 7-14 a 4 f, a 5-a 7 p, a 8-15 b 8, c 1-c 8 p, 16 d 1 p, d 2-d 3, 17 c 3-c 5 f, c 6-d 8.

9 d, प्राप्तास्त P. 10 a, °प्रवर्षेण P. b, क्षतोर्थतां P. c, सुखोत्पत्ति P. d, मस्यति P. 11 c, °कल्पसखान् P. d, तान्स्मर्त्तुमिहार्हसि P. 13 a, प्रतिपचेष्टयोर्ज्ञेयो P c, विरोधाहि P. 14 a, निवृत्त P. b, व्यापदंश्च P. d, सुस्नात LPC. 15 d, ध्यातुमर्हति G. 16 d, °स्वमनोद्रु(?)ष्व(?)चेतसः P. 17 b, मैत्री P; H.c. c, विहिंसा P. d, विकल्पेयितु° P.

यद्यदेव प्रसक्तं हि वितर्कयति मानवः ।
अभ्यासात्तेन तेनास्य नतिर्भवति चेतसः ॥१८॥
तस्मादकुशलं त्यक्त्वा कुशलं ध्यातुमर्हसि ।
यत्ते स्यादिह चार्थाय परमार्थस्य चाप्तये ॥१९॥
संवर्धन्ते ह्यकुशला वितर्काः संभृता हृदि ।
अनर्थजनकास्तुल्यमात्मनश्च परस्य च ॥२०॥
श्रेयसो विघ्नकरणाद्भवन्त्यात्मविपत्तये ।
पाचीभावोपघातात्तु परभक्तिविपत्तये ॥२१॥
मनःकर्मस्वविक्षेपमपि चाभ्यस्तुमर्हसि ।
नत्वेवाकुशलं सौम्य वितर्कयितुमर्हसि ॥२२॥
या त्रिकामोपभोगाय चिन्ता मनसि वर्तते ।
न च तं गुणमाप्नोति बन्धनाय च कल्पते ॥२३॥
सत्त्वानामुपघाताय परिक्लेशाय चात्मनः ।
मोहं व्रजति कालुष्यं नरकाय च वर्तते ॥२४॥
तद्वितर्कैरकुशलैर्नात्मानं हन्तुमर्हसि ।
सुशस्त्रं रत्नविकृतं मृद्धतो गा खनन्निव ॥२५॥
अनभिज्ञो यथा जात्यं दहेदगुरु काष्ठवत् ।
अन्यायेन मनुष्यत्वमुपहन्यादिदं तथा ॥२६॥

L has 18 a 1 b 8 c 1–c 2 f 20 d 6 f d 7 21 a 5 (fol 2, b) 21 a 6–c 8 d 1 d 5 f
24 a 5 p a 6–2, b 2 b 3 b 8 p c 1–c 2 c 3 d 3 f 26 c 5–c 8

18 b पिपर्ज्जयति P 20 a सपर्द्दन्ते P b सभूता P d °त्मनस्तपराश्च P
21 l °वन्त्याम्पपि° L °वन्त्यान्मेवि° P c पीची° P °पघातन्तु LP 22 a °कर्म्म-
सुविचेप्य° P b पाव्वस्तुम° P पाभ्यस्तुम° G c नत्वेक (or के) कुशल I Cc
23 b, P om म Cc पत्तते P 24 a °मपघाताय P b पामम P d मर
कायप P 25 b हेतुम° P d मृद (or द) तोर्गा P मृद्धतीर्गा C 26 b दहेदे
गुरु I d °पहेन्या° P

त्यक्त्वा रत्नं यथा लोष्टं रत्नद्वीपाच्च संहरेत् ।
त्यक्त्वा नैःश्रेयसं धर्मं चिन्तयेदशुभं तथा ॥२७॥
हिमवन्तं यथा गत्वा विष भुञ्जीत नौषधं ।
मनुष्यत्वं तथा प्राप्य पापं सेवेत नो शुभं ॥२८॥
तद्बुद्ध्वा प्रतिपक्षेण वितर्कं क्षेप्तुमर्हसि ।
सूक्ष्मेण प्रतिकीलेन कीलं दार्वन्तरादिव ॥२९॥
वृद्ध्यवृद्ध्योरथ भवेच्चिन्ता ज्ञातिजनं प्रति ।
स्वभावो जीवलोकस्य परीक्ष्यस्तन्निवृत्तये ॥३०॥
संसारे कृष्यमाणानां सत्त्वानां स्वेन कर्मणा ।
को जनः स्वजनः को वा मोहात्सक्तो जने जनः ॥३१॥
अतीतेऽध्वनि संवृत्तः स्वजनो हि जनस्तव ।
अप्राप्ते चाध्वनि जनः स्वजनस्ते भविष्यति ॥३२॥
विहगानां यथा सायं तत्र तत्र समागमः ।
जातौ जातौ तथाश्लेषो जनस्य स्वजनस्य च ॥३३॥
प्रतिश्रयं बहुविधं संश्रयन्ति यथाध्वगाः ।
प्रतियान्ति पुनस्त्यक्त्वा तद्वज्ज्ञातिसमागमः ॥३४॥
लोके प्रकृतिभिन्नेऽस्मिन्न कश्चित्कस्यचित्प्रियः ।
कार्यकारणसंबद्धं बालुकामुष्टिवज्जगत् ॥३५॥

L has 27 b 8 f, c 1–29 b 2, b 3 b 7 p b 8 c 1–c 6 p, c 7–d 1 f, d 2–30 a 4 a 6 f, a 7–a 8, b 1–b 2 p, b 3 c 4 f, c 5–35 d 8

27 c, नैश्रियसं L, नैश्रियधर्मं P. 28 c, मनुष्यसं (?) P. 30 c, स्वभावौ P.
31 c, सुजनः P, bottom of स missing in L, H c. 32 a, अतिते P. b, जनस्तवः P
c d, अमस्वजन॰ P 33 a, साय P 35 b, कश्चचिन्प्रियः P

विभर्ति हि सुतं माता धारयिष्यति मामिति ।
मातरं भजते पुत्रो गर्भेणाधत्त मामिति ॥३६॥

अनुकूलं प्रवर्तन्ते ज्ञातिषु ज्ञातयो यदा ।
तदा स्नेहं प्रकुर्वन्ति रिपुत्वं तु विपर्ययात् ॥३७॥

अहितो दृश्यते ज्ञातिरज्ञातिर्दृश्यते हितः ।
स्नेहं कार्यान्तराल्लोकश्छिनत्ति च करोति च ॥३८॥

स्वयमेव यथालिख्य रज्येच्चित्रकरः स्त्रियं ।
तथा कृत्वा स्वयं स्नेहं संगमेति जने जनः ॥३९॥

योऽभवद्बान्धवजनः परलोके प्रियस्तव ।
स ते कमर्थं कुरुते त्वं वा तस्मै करोषि कं ॥४०॥

तस्माज्ज्ञातिवितर्केण मनो नावेष्टुमर्हसि ।
व्यवस्था नास्ति संसारे स्वजनस्य जनस्य च ॥४१॥

असौ क्षेमो जनपदः सुभिक्षोऽसावसौ शिवः ।
इत्येवमथ जायेत वितर्कस्तव कश्चन ॥४२॥

प्रहेयः स त्वया सौम्य नाधिवास्यः कथंचन ।
विदित्वा सर्वमादीप्तं तैस्तैर्दोषाग्निभिर्जगत् ॥४३॥

ऋतुचक्रनिवर्ताच्च क्षुत्पिपासाक्लमादपि ।
सर्वत्र नियतं दुःखं न क्वचिद्विद्यते शिवं ॥४४॥

L has 36 a 1 40 d 5 (fol. 26 a) 40 d 6 44 d 8

36 d. गर्भिणाधत्त P 37 a. अनुकुल P 38 cd कार्यान्तरात्लोकश्छिनत्ति P 39 b. रज्येच्चि° P 40 a. सोभगवद्बान्धव° P b. प्रियेस्तव P. 41 a. तस्मा-ज्ञाति° L, third letter uncertain in P P om second त d. व्यवेस्थ P 43 c. °मादिप्तं P 44 a. रातुचक्र° P °निवर्ताच्च C b. °पासक्ल° LP c. सिर्वत्र P

क्वचिच्छीतं क्वचिद्धर्मः क्वचिद्रोगो भयं क्वचित् ।
बाधतेऽभ्यधिकं लोके तस्मादशरणं जगत् ॥४५॥
जरा व्याधिश्च मृत्युश्च लोकस्यास्य महद्भयं ।
नास्ति देशः स यत्रास्य तद्भयं नोपपद्यते ॥४६॥
यत्र गच्छति कायोऽयं दुःखं तत्रानुगच्छति ।
नास्ति काचिद्गतिर्लोके गतो यत्र न बाध्यते ॥४७॥
रमणीयोऽपि देशः सन्सुभिक्षः क्षेम एव च ।
कुदेश इति विज्ञेयो यत्र क्लेशैर्विदह्यते ॥४८॥
लोकस्याभ्याहतस्यास्य दुःखैः शारीरमानसैः ।
क्षेमः कश्चिन्न देशोऽस्ति स्वस्थो यत्र गतो भवेत् ॥४९॥
दुःखं सर्वत्र सर्वस्य वर्तते सर्वदा यदा ।
छन्दरागमतः सौम्य लोकचित्रेषु मा कृथा ॥५०॥
यदा तस्मान्निवृत्तस्ते छन्दरागो भविष्यति ।
जीवलोकं तदा सर्वमादीप्तमिव मंस्यसे ॥५१॥
अथ कश्चिद्वितर्कस्ते भवेदमरणाश्रयः ।
यत्नेन स विहन्तव्यो व्याधिरात्मगतो यथा ॥५२॥
मुहूर्तमपि विश्रम्भः कार्यो न खलु जीविते ।
निलीन इव हि व्याघ्रः कालो विश्वस्तघातकः ॥५३॥

L has 45 a 1–51 d 8, 52 a 1–b 8 p, c 2 c 4 f, c 5–d 1, d 3 d 7 p, 53 a 5–b 1 f, b 2 p, b 3 d 8

45 c, बाधधते P. 46 c d, P om नास्ति to तद्भयं inclusive 50 c, P om. म. d, लोकेचित्रेषु P 51 a, तस्मान्निवृत्त° P. d, °मादिप्तमिवे P. 53 a b, विस्रम्भः-कार्यो P

बलस्थोऽहं युवा वेति न ते भवितुमर्हति ।
मृत्युः सर्वास्ववस्थासु हन्ति नावेक्षते वयः ॥५४॥
क्षेत्रभूतमनर्थानां शरीरं परिकर्षतः ।
स्वास्थ्याशा जीविताशा वा न दृष्टार्थस्य जायते ॥५५॥
निर्वृतः को भवेत्कायं महाभूताश्रयं वहन् ।
परस्परविरुद्धानामहीनामिव भाजनं ॥५६॥
प्रश्वसित्ययमन्वक्षं यदुच्छ्वसिति मानवः ।
अवगच्छ तदाश्चर्यमविश्वास्यं हि जीवितं ॥५७॥
इदमाश्चर्यमपरं यत्सुप्तः प्रतिबुध्यते ।
स्वपित्युत्थाय वा भूयो बह्वमित्रा हि देहिनः ॥५८॥
गर्भात्प्रभृति यो लोकं जिघांसुरनुगच्छति ।
कस्तस्मिन्विश्वसेन्मृत्यावुद्यतासावरविव ॥५९॥
प्रसूतः पुरुषो लोके श्रुतवान्बलवानपि ।
न जयत्यन्तकं कश्चिन्नाजयन्नापि जेष्यति ॥६०॥
साम्ना दानेन भेदेन दण्डेन नियमेन वा ।
प्राप्तो हि रभसो मृत्युः प्रतिहन्तुं न शक्यते ॥६१॥

L has 54 a 1 d 1, d 2-d 6 f, d 7, d 8 55 a 1 a 8 f, 56 a 1 a 2 p d 2 d 3 p d 4, 57 d 1, d 2 d 5 f, 60 a 3 f a 4-b 2 (fol 26 b) 60 b 3 d 6 d 7 d 8 p 61 a 1 a 2 f.

54 a चेति P b, °महंसि P 55 a °मार्थाभा P. c, स्वस्थाप्रा P, G.c जीविताशा (m) P d, दृस्तार्थस्य P 56 a, निवृत P c °विमुद्धानाम° P. 57 b, यद्रच्छूसिति P 58 d, बह्नमित्राणि P, C c 59 a, गर्भान्प्र° P. 60 b, श्रुतवान्य(?)लवा° L, श्रुतावात्य(?)लवा° P, C.c 61 a सामादानम P. b, नियमेन P

तस्मान्नायुषि विश्वासं चञ्चले कर्तुमर्हसि ।
नित्यं हरति कालो हि स्थाविर्यं न प्रतीक्षते ॥६२॥
निःसारं पश्यतो लोकं तोयबुद्बुददुर्बलं ।
कस्यामरवितर्को हि स्यादनुन्मत्तचेतसः ॥६३॥
तस्मादेषां वितर्काणां प्रहाणार्थं समासतः ।
आनापानस्मृतिं सौम्य विषयीकर्तुमर्हसि ॥६४॥
इत्यनेन प्रयोगेण काले सेवितुमर्हसि ।
प्रतिपक्षान्वितर्काणां गदानामगदानिव ॥६५॥
सुवर्णहेतोरपि पांसुधावको विहाय पांसून्बृहतो यथादितः ।
जहाति सूक्ष्मानपि तद्विशुद्धये विशोध्य हेमावयवान्नियच्छति ॥६६॥
विमोक्षहेतोरपि युक्तमानसो विहाय दोषान्बृहतस्तथादितः ।
जहाति सूक्ष्मानपि तद्विशुद्धये विशोध्य धर्मावयवान्नियच्छति ॥६७॥

क्रमेणाद्भिः शुद्धं कनकमिह पांसुव्यवहितं
यथाग्नौ कर्मारः पचति भृशमावर्तयति च ।
तथा योगाचारो निपुणमिह दोषव्यवहितं
विशोध्य क्लेशेभ्यः शमयति मनः संक्षिपति च ॥६८॥

L has 63 b 1–b 8 f, c 1–64 b 8, c 1–c 3 p, c 4, c 5 c 8 p, d 1–d 2 f, 65 c 2–c 4 f, c 5–c 7 p, 66 b 4–b 5 f, b 6 67 b 12, c 2–c 8 p, c 9–d 6 f, d 7–d 12, 68 a 1–a 5 p, a 9–a 11 f, b 1 f, b 2–b 5 p, b 6–d 17.

62 b, नित्य P. 63 a, निसाचं P. b, °दुवलं P. d, °चेतस: P. 64 a b, °देषावितर्क्षणांप्रहाणार्थं P. 65 c, प्रतिपचंवि° P, L uncertain; G.c. d, गदातान° P. 66 a, °हेतोविवि (possibly meant to be crossed out) यथांसु° P. c, जहानि P. तेद्विसुद्धये P. 67 c, P om. त. 68 a, क्रमेणाद्भिःसुद्ध P. पासु° P. b, यथाग्नो P. °वर्त्तयचित P. d, क्लेमभ्यः P.

यथा च स्वच्छन्दादुपनयति कर्माश्रयसुखं
सुवर्णं कर्मारो बहुविधमलंकारविधिषु ।
मनःशुद्धो भिक्षुर्वशगतमभिज्ञास्वपि तथा
यथेच्छं यत्रेच्छं शमयति मनः प्रेरयति च ॥६९॥

सौन्दरनन्दे महाकाव्ये वितर्कप्रहाणो नाम पञ्चदशः सर्गः ।

L has all.

69 c, मनःसुद्धं L, मनस्शुद्धं P, मनःशुद्धो G    col, सौन्दरा॰ P.  पचदशः L

## CANTO XVI

एवं मनोधारणया क्रमेण व्यपोह्य किंचित्समुपोह्य किंचित् ।
ध्यानानि चत्वार्यधिगम्य योगी प्राप्नोत्यभिज्ञा नियमेन पञ्च ॥१॥
ऋद्धिप्रवेकं च बहुप्रकारं परस्य चेतश्चरितावबोधं ।
अतीतजन्मस्मरणं च दीर्घं दिव्ये विशुद्धे श्रुतिचक्षुषी च ॥२॥
अतःपरं तत्त्वपरीक्षणेन मनो दधात्यास्रवसंक्षयाय ।
ततो हि दुःखप्रभृतीनि सम्यक्चत्वारि सत्यानि पदान्यवैति ॥३॥
बाधात्मकं दुःखमिदं प्रसक्तं दुःखस्य हेतुः प्रभवात्मकोऽयं ।
दुःखक्षयो निःसरणात्मकोऽयं त्राणात्मकोऽयं प्रशमाय मार्गः ॥४॥
इत्यार्यसत्यान्यवबुध्य बुद्ध्या चत्वारि सम्यक् प्रतिविध्य चैव ।
सर्वास्रवान् भावनयाभिभूय न जायते शान्तिमवाप्य भूयः ॥५॥
अबोधतो ह्यप्रतिवेधतश्च तत्त्वात्मकस्यास्य चतुष्टयस्य ।
भवाद्भवं याति न शान्तिमेति संसारदोलामधिरुह्य लोकः ॥६॥
तस्माज्जरादेर्व्यसनस्य मूलं समासतो दुःखमवेहि जन्म ।
सर्वौषधीनामिव भूर्भवाय सर्वापदां क्षेत्रमिदं हि जन्म ॥७॥

L has 1 a 1–5 c 11, (fol 27 a) 5 d 1–7 d 11.

1 b, °त्समुयोह्य P. d, P om त्य. 2 b, °ववोध P. d, दिव्य P. 3 a b, °परि-षयेमम P (one syllable short) c d, संम्यकक्र° P 5 b, प्रतिबुद्ध्य LPC. c, भाव-नयातिभूय P 6 b, तत्वान्मक° L. d, संसारलाकाम° corrected to °दोलाम° L, °दोलाधाम° P. 7 a, °रादेव्यस° P. b, दूःखम° P. c, भूवर्भवाय P.

यज्जन्म रूपस्य हि सेन्द्रियस्य दुःखस्य तन्नैकविधस्य जन्म ।
यः संभवश्चास्य समुच्छ्रयस्य मृत्योश्च रोगस्य च संभवः सः ॥८॥
सद्वाप्यसद्वा विषमिश्रमन्नं यथा विनाशाय न धारणाय ।
लोके तथा तिर्यगुपर्यधो वा दुःखाय सर्वं न सुखाय जन्म ॥९॥
जरादयो नैकविधा प्रजानां सत्यां प्रवृत्तौ प्रभवन्त्यनर्थाः ।
प्रवात्सु घोरेष्वपि मारुतेषु न ह्यप्रसूतास्तरवश्चलन्ति ॥१०॥
आकाशयोनिः पवनो यथा हि यथा शमीगर्भशयो हुताशः ।
आपो यथान्तर्वसुधाशयाश्च दुःखं तथा चित्तशरीरयोनि ॥११॥
अपां द्रवत्वं कठिनत्वमुर्व्या वायोश्चलत्वं ध्रुवमौष्ण्यमग्नेः ।
यथा स्वभावो हि तथा स्वभावो दुःखं शरीरस्य च चेतसश्च ॥१२॥
काये सति व्याधिजरादि दुःखं क्षुत्तर्षवर्षोष्णहिमादि चैव ।
रूपाश्रिते चेतसि सानुबन्धे शोकारतिक्रोधभयादि दुःखं ॥१३॥
प्रत्यक्षमालोक्य च जन्मदुःखं दुःखं तथातीतमपीति विद्धि ।
यथा च तद्दुःखमिदं च दुःखं दुःखं तथानागतमप्यवेहि ॥१४॥
बीजस्वभावो हि यथेह दृष्टो भूतोऽपि भव्योऽपि तथानुमेयः ।
प्रत्यक्षतश्च ज्वलनो यथोष्णो भूतोऽपि भव्योऽपि तथोष्ण एव ॥१५॥

)

L has 8 a 1-14 d 9, d 10 d 11 p, 15 a 1 a 11 f, b 1 b 5, b 6 b 7 f, b 8-b 11, c 1-c 5 f, c 9 f, c 10-d 11

8 c यस्संभव॰ P. d, मृत्योच P संभवश्चः P 9 a, धिपमिश्र॰ P. c, ॰पर्यंधोधा P d, सवं P. 10 a, नैकविधाः P b, प्रभवन्त्यनथा. P d, ह्यप्रसुतोस्तरवयरन्ति P 11 c, आपी P d, ॰योनिः LP Cc 12 a, कधिनत्वमुर्व्यां P b, ध्रुवमुष्णमपेः G, ॰मग्नेः P, ॰मपेः L c, यथास्वभावो P d दु॰ख P 13 a, कायि P c, रूपाश्रिते P 14 a, ॰मालोक्य P c, तद्दुःखमिदं P d, ॰प्यवेहि LP 15 a, दृष्टो P

तन्नामरूपस्य गुणानुरूपं यत्रैव निर्वृत्तिरुदारवृत्त ।
तत्रैव दुःखं न हि तद्विमुक्तं दुःखं भविष्यत्यभवद्भवेद्वा ॥१६॥
प्रवृत्तिदुःखस्य च तस्य लोके तृष्णादयो दोषगणा निमित्तं ।
नैवेश्वरो न प्रकृतिर्न कालो नापि स्वभावो न विधिर्यदृच्छा ॥१७॥
ज्ञातव्यमेतेन च कारणेन लोकस्य दोषेभ्य इति प्रवृत्तिः ।
यस्माम्म्रियन्ते सरजस्तमस्का न जायते वीतरजस्तमस्कः ॥१८॥
इच्छाविशेषे सति तत्र तत्र यानासनादेर्भवति प्रयोगः ।
यस्मादतस्तर्षवशात्तथैव जन्म प्रजानामिति वेदितव्यं ॥१९॥
सत्त्वान्यभिष्वङ्गवशानि दृष्ट्वा स्वजातिषु प्रीतिपराण्यतीव ।
अभ्यासयोगादुपपादितानि तैरेव दोषैरिति तानि विद्धि ॥२०॥
क्रोधप्रहर्षादिभिराश्रयाणामुत्पद्यते चेह यथा विशेषः ।
तथैव जन्मस्वपि नैकरूपो निर्वर्तते क्लेशकृतो विशेषः ॥२१॥
दोषाधिके जन्मनि तीव्रदोष उत्पद्यते रागिणि तीव्ररागः ।
मोहाधिके मोहबलाधिकश्च तदल्पदोषे च तदल्पदोषः ॥२२॥
फलं हि यादृक् समवैति साक्षात्तदागमाद्बीजमवैत्यतीतं ।
अवेत्य बीजप्रकृतिं च साक्षादनागतं तत्फलमभ्युपैति ॥२३॥

L has 16 a 1 17 a 8, a 9 a 10 p, a 11–b 2 f, d 5–d 9 f, 18 b 11 f, c 1–19 b 3, b 4 b 11 p, c 5 c 6 p, 21 a 1 f a 2 a 9 (fol 27 b) 21 a 10–c 10, c 11–d 7 p, 23 c 1–c 3 f, c 4–d 11

16 a, गुणानुरूप LPC b, पत्रैव P. d, °भवद्भिवद्वा P 17 a प्रवृत्तिं° P b, तृष्णा° P d, विधिय्यदृच्छा P. 18 a, घातव्यमेनेन P, G c c, यस्माम्नृ° (m) L, यस्मात्मृ° P 19 b, °सनादिर्भ° LPC, G c c, °वशातथैव P 20 a, सत्त्वान्येभि° P d, P om पै, C c 22 a, रोषाधिके P, रोषाधिके G, C c तीव्ररोष G 23 b, °त्तदागमोबीजगमवे° P, G c c, अवेत्य PC, H c °प्रकृति P

दोषक्षयो जातिषु यासु यस्य वैराग्यतस्तासु न जायते सः ।
दोषाशयस्तिष्ठति यस्य यत्र तस्योपपत्तिर्विवशस्य तत्र ॥२४॥
तज्जन्मनो नैकविधस्य सौम्य तृष्णादयो हेतव इत्यवेत्य ।
तांश्छिन्धि दुःखाद्यदि निर्मुमुक्षा कार्यक्षयः कारणसंक्षयाद्धि ॥२५॥
दुःखक्षयो हेतुपरिक्षयाच्च शान्तं शिवं साक्षिकुरुष्व धर्मं ।
तृष्णाविरागं लयनं निरोधं सनातनं त्राणमहार्यमार्यं ॥२६॥
यस्मिन्न जातिर्न जरा न मृत्युर्न व्याधयो नाप्रियसंप्रयोगः ।
नेच्छाविपन्न प्रियविप्रयोगः क्षेमं पदं नैष्ठिकमच्युतं तत् ॥२७॥
दीपो यथा निर्वृतिमभ्युपेतो नैवावनिं गच्छति नान्तरिक्षं ।
दिशं न कांचिद्विदिशं न कांचित्स्नेहक्षयात्केवलमेति शान्तिं ॥२८॥
एवं कृती निर्वृतिमभ्युपेतो नैवावनिं गच्छति नान्तरिक्षं ।
दिशं न कांचिद्विदिशं न कांचित्क्लेशक्षयात्केवलमेति शान्तिं ॥२९॥
अस्याभ्युपायोऽधिगमाय मार्गः प्रज्ञात्रिकल्पः प्रशमद्विकल्पः ।
स भावनीयो विधिवद्बुधेन शीले शुचौ त्रिप्रमुखे स्थितेन ॥३०॥
वाक्कर्म सम्यक् सहकायकर्म यथावदाजीवनयश्च शुद्धः ।
इदं त्रयं वृत्तविधौ प्रवृत्तं शीलाश्रयं कर्मपरिग्रहाय ॥३१॥
सत्येषु दुःखादिषु दृष्टिरार्या सम्यग्वितर्कश्च पराक्रमश्च ।
इदं त्रयं ज्ञानविधौ प्रवृत्तं प्रज्ञाश्रयं क्लेशपरिक्षयाय ॥३२॥

L has 24 a 1–c 6, c 7 c 9 f, 25 b 4–l 8 f, d 8–27 b 4, b 5–b 7 p, b 8–b 11, c 1 c 10 p, d 1 p, d 2–d 6 d 7 f, d 9 p, d 10–d 11, 28 a 1 f a 9–b 4 l, b 5 32 d 11

24 a, पाशु(?) L. a l, पासुत्रस्यवैराग्यत॰ P 25 c दुःखाद्यपि P 26 l, धर्मं P d, ॰मार्यं P 27 a, जातिस्र P. a b मृत्युस्र P l, व्याधियो LP 28 l, भिवा॰ षनि P. d, चापितत्रे॰ P 29 a छतिनिवृति॰ P c, दिशमर्थापद्वि॰ P 30 l, प्रज्ञातिकल्पः P c, P om धे 31 c d प्रवृत्तशीलाश्रय P d, धर्मपरि॰ षहाय LC, धर्मपरिग्रहाय P 32 c, प्रवृत्तं P

न्यायेन सत्याधिगमाय युक्ता सम्यक् स्मृतिः सम्यगथो समाधिः ।
इदं द्वयं योगविधौ प्रवृत्तं शमाश्रयं चित्तपरिग्रहाय ॥३३॥
क्लेशाङ्कुरान्न प्रतनोति शीलं बीजाङ्कुरान् काल इवातिवृत्तः ।
शुचौ हि शीले पुरुषस्य दोषा मनः सलज्जा इव धर्षयन्ति ॥३४॥
क्लेशांस्तु विष्कम्भयते समाधिर्वेगानिवाद्रिर्महतो नदीनां ।
स्थिते समाधौ हि न धर्षयन्ति दोषा भुजंगा इव मन्त्रबद्धाः ॥३५॥
प्रज्ञा त्वशेषेण निहन्ति दोषांस्तीरद्रुमान्प्रावृषि निम्नगेव ।
दग्धा यया न प्रभवन्ति दोषा वज्राग्निनेवानुसृतेन वृक्षाः ॥३६॥
त्रिस्कन्धमेतं प्रविगाह्य मार्गं प्रस्पष्टमष्टाङ्गमहार्यमार्यं ।
दुःखस्य हेतून्प्रजहाति दोषान्प्राप्नोति चात्यन्तशिवं पदं तत् ॥३७॥
अस्योपचारे धृतिरार्जवं च ह्रीरप्रमादः प्रविविक्तता च ।
अल्पेच्छता तुष्टिरसंगता च लोकप्रवृत्तावरतिः क्षमा च ॥३८॥
याथात्म्यतो विन्दति यो हि दुःखं तस्योद्भवं तस्य च यो निरोधं ।
आर्येण मार्गेण स शान्तिमेति कल्याणमित्रैः सह वर्तमानः ॥३९॥
यो व्याधितो व्याधिमवैति सम्यग् व्याधेर्निदानं च तदौषधं च ।
आरोग्यमाप्नोति हि सोऽचिरेण मित्रैरभिज्ञैरुपचर्यमाणः ॥४०॥
तद्व्याधिसंज्ञां कुरु दुःखसत्ये दोषेष्वपि व्याधिनिदानसंज्ञां ।
आरोग्यसंज्ञां च निरोधसत्ये भैषज्यसंज्ञामपि मार्गसत्ये ॥४१॥

L has 33 a 1–35 d 11, (fol. 28 a) 36 a 1 41 d 11

33 a सत्याभिगमाय LPC, G c b, सम्यक् P 34 a, क्लेशाङ्कुरन P d सरज्जा P वर्जयन्ति G 35 c स्थित G हितधर्ष॰ P 36 a त्वसेषेण P b, मावृषि P d वज्राग्नि॰ P 37 a मार्गं P c, हेतूप्रज॰ P d ॰न्प्राप्नोति P 38 a अस्यो पचार LP, ॰चारो G वृतिरा॰ P d ॰प्रवृत्ताचरति॰ PC, L uncertain G n c 39 a यथात्म्यतो P c, आर्यंयमा॰ P c d सान्तिमेतिकल्यान॰ P 40 a, सम्यग् P c चिरेण L चिचन P, C c 41 a ॰सज्ञा P c, आरोग्यसं(or स)ज्ञा P ॰सत्य P d, भैष्यह्यस॰ L. ॰सज्ञामभिमार्गसत्यि(त्य) P

तस्मात्प्रवृत्तिं परिगच्छ दुःखं प्रवर्तकानप्यवगच्छ दोषान् ।
निवृत्तिमागच्छ च तन्निरोधं निवर्तकं चाप्यवगच्छ मार्गं ॥४२॥
शिरस्यथो वाससि संप्रदीप्ते सत्यावबोधाय मतिर्विचार्या ।
दग्धं जगत्सत्यनयं ह्यदृष्ट्वा प्रदह्यते संप्रति धक्ष्यते च ॥४३॥
यदैव यः पश्यति नामरूपं क्षयीति तद्दर्शनमस्य सम्यक् ।
सम्यक्च निर्वेदमुपैति पश्यन्नन्दीक्षयाच्च क्षयमेति रागः ॥४४॥
तयोश्च नन्दीरजसोः क्षयेण सम्यग्विमुक्तं प्रवदामि चेतः ।
सम्यग्विमुक्तिर्मनसश्च ताभ्यां न चास्य भूयः करणीयमस्ति ॥४५॥
यथास्वभावेन हि नामरूपं तद्धेतुमेवास्तगमं च तस्य ।
विजानतः पश्यत एव चाहं ब्रवीमि सम्यक्क्षयमास्रवाणां ॥४६॥
तस्मात्परं सौम्य विधाय वीर्यं शीघ्रं घटस्वास्रवसंक्षयाय ।
दुःखाननित्यांश्च निरात्मकांश्च धातून्विशेषेण परीक्षमाणः ॥४७॥
धातून्हि षड् भूसलिलानलादीन्सामान्यतः स्वेन च लक्षणेन ।
अवैति यो नान्यमवैति तेभ्यः सोऽत्यन्तिकं मोक्षमवैति तेभ्यः ॥४८॥
क्लेशप्रहाणाय च निश्चितेन कालोऽभ्युपायश्च परीक्षितव्यः ।
योगोऽप्यकाले ह्यनुपायतश्च भवत्यनर्थाय न तद्गुणाय ॥४९॥

L has 42 a 1–44 c 9 c 10–d 10 p, d 11–45 a 5 a 6–a 9 f, a 10–b 7 p, b 8–46 b 1, b 2–b 11 p, c 1–c 5 f, c 7–c 8, c 9–d 3 f, d 11 f, 47 b 3 b 9 f, d 6–d 8 f, d 10 48 c 3, c 4 f

42 a, प्रवृर्त्तिं P c, निवृर्त्तिमा° LP d चाप्यपमच्छ P 43 b, मतिर्विचार्य्या P. d, धप्रतिषघते P. 44 a, पथ्यति P cd, पर्थन्नदी° P, पचे(?)म्नन्दी° L, Cc. 45 a b, पयेणसम्य° P. c, सम्य° P. d भूयो P 46 b, °मेवोद्गमम P 47 b, शीघ्रघकास्ता° P d धातुवि° P °माम. P 48 a धातुन्हि L, धातुहिषद्ध(? ड्)-सलि° P c, तभ्यः P 49 a निषतेन P b कारो P S and H c

अजातवत्सां यदि गां दुहीत नैवाप्नुयात्क्षीरमकालदोही ।
कालेऽपि वा स्यान्न पयो लभेत मोहेन शृङ्गाद्यदि गां दुहीत ॥५०॥
आर्द्राच्च काष्ठाज्ज्वलनाभिकामो नैव प्रयत्नादपि वह्निमृच्छेत् ।
काष्ठाच्च शुष्कादपि पातनेन नैवाग्निमाप्नोत्यनुपायपूर्वं ॥५१॥
तद्देशकालौ विधिवत्परीक्ष्य योगस्य मात्रामपि चाभ्युपायं ।
बलाबले चात्मनि संप्रधार्य कार्यः प्रयत्नो न तु तद्विरुद्धः ॥५२॥
प्रग्राहकं यत्तु निमित्तमुक्तमुद्धन्यमाने हृदि तन्न सेव्यं ।
एवं हि चित्तं प्रशमं न याति ***ना वह्निरिवेर्यमाणः ॥५३॥
शमाय यत्स्यान्नियतं निमित्तं जातोद्धवे चेतसि तस्य कालः ।
एवं हि चित्तं प्रशमं नियच्छेत्प्रदीप्यमानोऽग्निरिवोदकेन ॥५४॥
शमावहं यन्नियतं निमित्तं सेव्यं न तच्चेतसि लीयमाने ।
एवं हि भूयो लयमेति चित्तमनीर्यमाणोऽग्निरिवाल्पसारः ॥५५॥
प्रग्राहकं यन्नियतं निमित्तं लयं गते चेतसि तस्य कालः ।
क्रियासमर्थं हि मनस्तथा स्यान्मन्दायमानोऽग्निरिवेन्धनेन ॥५६॥
औपेक्षिकं नापि निमित्तमिष्टं लयं गते चेतसि सोद्धवे वा ।
एवं हि तीव्रं जनयेदनर्थमुपेक्षितो व्याधिरिवातुरस्य ॥५७॥

L has 50 b 5 f, b 6–c 1, (fol 28 b) 50 c 2–c 8 p, c 9–d 1, d 2–d 8 p, 52 d 3–d 4 f, d 5–d 8, d 9 f, d 10 d 11 p, 53 a 1–b 10, b 11–c 8 p, c 9–c 11 f, d 2 f, d 4 f, d 7–d 8 p, d 10–d 11 f, 54 a 9–a 11 f, c 4 c 9 f, 55 a 9 a 11 f, b 2 p, b 3–56 c 11, d 1–d 11 p, 57 a 1–a 5, a 6–b 8 f, b 9–d 11

50 a, °वत्सा P. गा P. d, श्रिङ्गा° L. 51 a, आर्द्रीश्चकाष्ठाज्जल° P. c, गुष्कादि° P. 52 c, वात्मनिसप्रधार्य P. d, तेद्विरुद्धः P. 53 a, यन्तु (?) L, यस्तु (?) P. d, वह्निनोवह्नि° P (omitting a syllable), न वह्निना वह्निरि° C. 54 a, समायत्स्या° P. c d, नियच्छत्यदीर्य्यमानो P, नियच्छत्युदीर्य्यमाणो C, निगच्छत्यु° G. 55 a, समावहं P. P om °यतं नि, C.c. b, लियमाने P. d, °मणीर्यमाणो P. °वल्पसारः P. 56 a, P om. मि c, °समर्थ P. स्यात्म° P. 57 b, सद्धवे P. c d, जनयदनर्थमपेचितो P

यस्मादुपेक्षानियतं निमित्तं साम्यं गते चेतसि तस्य कालः ।
एवं हि कृत्याय भवेत्प्रयोगो रथो विधेयाश्व इव प्रयातः ॥५८॥
रागोद्धवव्याकुलितेऽपि चित्ते मैत्रोपसंहारविधिर्न कार्यः ।
रागात्मको मुह्यति मैत्रया हि स्नेहं कफक्षोभ इवोपयुज्य ॥५९॥
रागोद्धते चेतसि धैर्यमेत्य निषेवितव्यं त्वशुभं निमित्तं ।
रागात्मको ह्येवमुपैति शर्म कफात्मको रूक्षमिवोपयुज्य ॥६०॥
व्यापाददोषेण मनस्युदीर्णे न सेवितव्यं त्वशुभं निमित्तं ।
द्वेषात्मकस्य ह्यशुभा वधाय पित्तात्मनस्तीक्ष्ण इवोपचारः ॥६१॥
व्यापाददोषक्षुभिते तु चित्ते सेव्या स्वपक्षोपनयेन मैत्री ।
द्वेषात्मनो हि प्रशमाय मैत्री पित्तात्मनः शीत इवोपचारः ॥६२॥
मोहानुबद्धे मनसः प्रचारे मैत्राशुभा चैव भवत्ययोगः ।
ताभ्यां हि संमोहमुपैति भूयो वाय्वात्मको रूक्षमिवोपनीय ॥६३॥
मोहात्मिकायां मनसः प्रवृत्तौ सेव्यस्त्विदंप्रत्ययताविहारः ।
मूढे मनस्येष हि शान्तिमार्गो वाय्वात्मके स्निग्ध इवोपचारः ॥६४॥
उल्कामुखस्थं हि यथा सुवर्णं सुवर्णकारो धमतीह काले ।
काले परिप्रोक्षयते जलेन क्रमेण काले समुपेक्षते च ॥६५॥
दहेत्सुवर्णं हि धमन्नकाले जले क्षिपन्संशमयेदकाले ।
न चापि सम्यक् परिपाकमेनं नयेदकाले समुपेक्षमाणः ॥६६॥

L has 58 a 1 64 d 8, (fol 29 a) 64 d 9–66 d 11

58 c, भवेन्न॰ LP 59 a रागोद्यत॰ LP, G.c b, मित्रोपसहारविधिन(or धिंन?) P d, कफचोभयद्वो॰ L 60 a, रागोद्यते LP धैर्यमत्य P c, ह्यवमु॰ P d, रूक्षमि॰ P 61 a, व्यापारदोषेणमनस्युदीर्णे P 62 b ॰पनयन P 63 c, ताभ्या P d रूक्षमि॰ P 64 d, वाय्वात्मको P 65 b, सुवर्णकालो P c, परिमाषयते P d क्रमेन P समपेषते P 66 a ॰वर्ण P b अन्नपिपत्संशमयदकाल P, यन्नं षिपन् G c, सम्यक P d नयद॰ P

संप्रग्रहस्य प्रशमस्य चैव तथैव काले समुपेक्षणस्य ।
सम्यङ्निमित्तं मनसा त्ववेक्ष्यं नाशो हि यत्नोऽप्यनुपायपूर्वः ॥६७॥

इत्येवमन्यायनिवर्तनं च न्यायं च तस्मै सुगतो बभाषे ।
भूयश्च तत्तच्चरितं विदित्वा वितर्कहानाय विधीनुवाच ॥६८॥

यथा भिषक् पित्तकफानिलानां य एव कोपं समुपैति दोषः ।
शमाय तस्यैव विधिं विधत्ते व्यधत्त दोषेषु तथैव बुद्धः ॥६९॥

एकेन कल्पेन सचेन्न हन्यात्स्वभ्यस्तभावादशुभान्वितर्कान् ।
ततो द्वितीयं क्रममारभेत न त्वेव हेयो गुणवान्प्रयोगः ॥७०॥

अनादिकालोपचितात्मकत्वाद्बलीयसः क्लेशगणस्य चैव ।
सम्यक्प्रयोगस्य च दुष्करत्वाच्छेत्तुं न शक्याः सहसा हि दोषाः ॥७१॥

अण्व्या यथाण्या विपुलाणिरन्या निर्वाह्यते तद्विदुषा नरेण ।
तद्वत्तदेवाकुशलं निमित्तं क्षिपेन्निमित्तान्तरसेवनेन ॥७२॥

तथाप्यथाध्यात्मनवग्रहत्वान्नैवोपशाम्येदशुभो वितर्कः ।
हेयः स तद्दोषपरीक्षणेन सश्वापदो मार्ग इवाध्वगेन ॥७३॥

यथा क्षुधार्तोऽपि विषेण पृक्तं जिजीविषुर्नेच्छति भोक्तुमन्नं ।
तथैव दोषावहमित्यवेत्य जहाति विद्वानशुभं निमित्तं ॥७४॥

न दोषतः पश्यति यो हि दोषं कस्तं ततो वारयितुं समर्थः ।
गुणं गुणे पश्यति यश्च यत्र स वार्यमाणोऽपि ततः प्रयाति ॥७५॥

L has 67 a 1–73 c 9, c 10 d 9 p, d 10–74 a 4, b 3–b 5 f, b 7–b 9 p, b 10–75 b 11, c 1–c 7 p, c 8–c 10, c 11–d 4 f, d 11.

67 c, स्त्यपि (?) L., संस्यपि॰ P. स्वेदेषं P. d, यद्मा P. 68 c, भूयेष P.
69 a, भिषग्पित्त॰ P b, कोपंसमुपैति P c, तस्थैवविधंत्ते P (omitting two letters).
d व्यधत्त P 71 b, ॰लीयसः P c d, दुस्करत्वाधेत्तुं P. 72 a b, विपुरा (m) णि-
रण्यानिर्वाह्यते P 73 a तथाप्यथाध्यात्म॰ LPC: G.c.? 74 b, जिजीविषुर्मच्छति P.

व्यपत्रपन्ते हि कुलप्रसूता मनःप्रचारैरशुभैः प्रवृत्तैः ।
कण्ठे मनस्वीव युवा वपुष्मानचाक्षुषैरप्रयतैर्विषक्तैः ॥७६॥

निर्धूयमानास्त्वथ लेशतोऽपि तिष्ठेयुरेवाकुशला वितर्काः ।
कार्यान्तरैरध्ययनक्रियाद्यैः सेव्यो विधिर्विस्मरणाय तेषां ॥७७॥

स्वप्तव्यमप्येव विचक्षणेन कायक्लमो वापि निषेवितव्यः ।
न त्वेव संचिन्त्यमसन्निमित्तं यत्रावसक्तस्य भवेदनर्थः ॥७८॥

यथा हि भीतो निशि तस्करेभ्यो द्वारं प्रियेभ्योऽपि न दातुमिच्छेत् ।
प्राज्ञस्तथा संहरति प्रयोगं समं शुभस्याप्यशुभस्य दोषैः ॥७९॥

एवंप्रकारैरपि यद्युपायैर्निवार्यमाणा न पराङ्मुखाः स्युः ।
ततो यथास्थूलनिबर्हणेन सुवर्णदोषा इव ते प्रहेयाः ॥८०॥

द्रुतप्रयाणप्रभृतींश्च तीक्ष्णात्कामप्रयोगात्परिखिद्यमानः ।
यथा नरः संश्रयते तथैव प्राज्ञेन दोषेष्वपि वर्तितव्यं ॥८१॥

ते चेदलब्धप्रतिपक्षभावा नैवोपशाम्येयुरसद्वितर्काः ।
मुहूर्तमप्यप्रतिवध्यमाना गृहे भुजंगा इव नाधिवास्याः ॥८२॥

दन्तेऽपि दन्तं प्रणिधाय कामं ताल्वग्रमुत्पीड्य च जिह्वयापि ।
चित्तेन चित्तं परिगृह्य चापि कार्यः प्रयत्नो न तु तेऽनुवृत्ताः ॥८३॥

L has 76 a 2 f, d 11–77 a 2 f, a 3–c 10, c 11 p, 79 b 5–b 6 f, b 7–c 3, (fol 29 b) 79 c 4–d 2 p, d 3–d 5, d 10–80 a 5 p, 81 d 3–d 6 p, d 7–82 c 9, c 10–d 5 f, d 6–d 8, d 9–83 a 2 f, a 10–b 2 p.

76 c, मनस्वांव P. c d, वपुष्मान्नचा° PC. d, °प्रयुतै° PC 77 a, त्तो (possibly corrected to त्ति in L)पतोपि LPC, रोयतोऽपि SG, H c 78 a, स्वप्नंव्य° P. P om. च, Cc. d, यत्रावग्रत्तस्य P. 79 b, द्वारप्रियोभ्योपिनदातुमिच्छत् P. d, L om. प्यशुभस्य. 80 b, °माणो P. 81 a b, °प्रयाण(m)प्रभृतीक्ष्णनका° P (one syllable short), °प्रभृतीश तीक्ष्णका° C. b, °योगात्परि° P c, संश्रयत P. 82 a, तेचद्° P. c, मूर्हर्त्तम° P. 83 a, दन्तं P b, °मुत्पीड्य P

किमत्र चित्रं यदि वीतमोहो वनं गतः स्वस्थमना न मुह्येत् ।
आक्षिप्यमाणो हृदि तन्निमित्तैर्न क्षोभ्यते यः स कृती स धीरः ॥८४॥
तदार्यसत्याधिगमाय पूर्वं विशोधयानेन नयेन मार्गं ।
यात्रागतः शत्रुविनिग्रहार्थं राजेव लक्ष्मीमजितां जिगीषन् ॥८५॥
एतान्यरण्यान्यभितः शिवानि योगानुकूलान्यजनेरितानि ।
कायस्य कृत्वा प्रविवेकमात्रं क्लेशप्रहाणाय भजस्व मार्गं ॥८६॥
कौण्डिन्यनन्दकृमिलानिरुद्धास्तिष्योपसेनौ विमलोऽथ राधः ।
बाष्पोत्तरौ धौतकिमोहराजौ कात्यायनद्रव्यपिलिन्दवत्साः ॥८७॥
भद्दालिभद्रायणसर्पदाससुभूतिगोदत्तसुजातवत्साः ।
संग्रामजिद्भद्रजिदश्वजिच्च श्रोणश्च शोणश्च स कोटिकर्णः ॥८८॥
क्षेमाजितो नन्दकनन्दमाता वुपालिवागीशयशोयशोदाः ।
महाह्वयो वल्कलिराष्ट्रपालौ सुदर्शनस्वागतमेघिकाश्च ॥८९॥
स कप्फिनः काश्यप औरुविल्वो महामहाकाश्यपतिष्यनन्दाः ।
पूर्णश्च पूर्णश्च स पूर्णकश्च शोनापरान्तश्च स पूर्ण एव ॥९०॥
शारद्वतीपुत्रसुबाहुचुन्दाः कोन्देयकाप्यभृगुकुण्ठधानाः ।
सशैवलौ रेवतकौष्ठिलौ च मौद्गल्यगोत्रश्च गवांपतिश्च ॥९१॥

L has 84 a 7–a 10 f a 11–86 a 2 a 3 f a 9 b 4 f b 5–b 6 p b 7 91 d 11 *

84 b वन P स्वस्थममा P c आचिप्यमानो P 85 c यत्रागत L चत्रागत I G c °विनिर्ग्रहार्थं P d जिगीर्षन् P 86 b योगापुकृ° P c प्रविवेकमत्र G 87 b स्कध P d °मत्सा P 88 a भद्दारि° P °भद्रायन° L °सर्पदाश° P b °वत्सा I c सयामेजिद्भद्रेजिदश्वजित्र P d श्रोणश्चश्रोणश्च P 89 a क्षमाजितो P b P om one यशो and visarga and has यशो in different hand above 90 a कफिण LP C c काश्यपश्चोरुविल्वा P 91 a सारद्वती° P °चुन्दा P c °कौष्ठिलो LP

यं विक्रमं योगविधावकुर्वंस्तमेव शीघ्रं विधिवत्कुरुष्व ।
ततः पदं प्राप्स्यसि तैरवाप्तं सुखावृतैस्त्वं नियतं यशश्च ॥९२॥

द्रव्यं यथा स्यात्कटुकं रसेन तच्चोपयुक्तं मधुरं विपाके ।
तथैव वीर्यं कटुकं श्रमेण तस्यार्थसिद्ध्यै मधुरो विपाकः ॥९३॥

वीर्यं परं कार्यकृतौ हि मूलं वीर्यादृते काचन नास्ति सिद्धिः ।
उदेति वीर्यादिह सर्वसंपन्निर्वीर्यता चेत्सकलश्च पाप्मा ॥९४॥

अलब्धस्यालाभो नियतमुपलब्धस्य विगम-
स्तथैवात्मावज्ञा कृपणमधिकेभ्यः परिभवः ।
तमो निस्तेजस्त्वं श्रुतिनियमतुष्टिव्युपरमो
नृणां निर्वीर्याणां भवति विनिपातश्च भवति ॥९५॥

नयं श्रुत्वा शक्तो यदयमभिवृद्धिं न लभते
परं धर्मं ज्ञात्वा यदुपरि निवासं न लभते ।
गृहं त्यक्त्वा मुक्तो यदयमुपशान्तिं न लभते
निमित्तं कौसीद्यं भवति पुरुषस्यात्र न रिपुः ॥९६॥

अनिक्षिप्तोत्साहो यदि खनति गां वारि लभते
प्रसक्तं व्यामथ्नन् ज्वलनमरणिभ्यां जनयति ।
प्रयुक्ता योगे तु ध्रुवमुपलभन्ते श्रमफलं
द्रुतं नित्यं यान्त्यो गिरिमपि हि भिन्दन्ति सरितः ॥९७॥

I has 92 a 1–93 d 11, (fol. 30 a) 94 a 1–97 d 17

92 a, °विधाव° P. c, तैरवाप्त L. d, सखा(संख्या)वृतैस्त्व L, सख्यावृतैस्त्व P, संख्या च तैस्त्वं C, संख्यां च तां तमि° (or तैषां नि°) G 93 a, द्रव्य P c, वीर्य P. d, °सिद्धौ G 94 a, वीर्यं P d, °न्निर्वीर्यता P पाप्मां P 95 a 1, विगमस° P. 1, P om स्या and के c, ततो PS d, निर्वीर्याणा P विपातश्च P 96 a, श्रुत्वाश-क्तो C. b, धर्मं P d, कौसीद्यं P पुरुषस्यात्र P पुरुषस्यात्रपरिपु C 97 b, प्रसक्त P. d, यान्त्या P भिन्दति P

कृष्ट्वा गां परिपाल्य च श्रमशतैरश्नोति सस्यश्रियं
यत्नेन प्रविगाह्य सागरजलं रत्नश्रिया क्रीडति ।
शत्रूणामवधूय वीर्यमिषुभिर्भुङ्क्ते नरेन्द्रश्रियं
तद्वीर्यं कुरु शान्तये विनियतं वीर्ये हि सर्वर्द्धयः ॥९८॥

सौन्दरनन्दे महाकाव्य आर्यसत्यव्याख्यानो नाम षोडशः सर्गः ।

L has all.

98 a, °शतैरश्नाति L, °शतिरस्नातिशस्य° P; G c. b, सागल(m.)जलं P. c, °मवधीय P. °र्भुक्ते P. नरेन्द्रः LPC (visarga possibly meant to be erased in L); G.c. d, तद्वीयं P. सर्व्वर्द्धयद्दति L, सर्व्वयद्दति P. col., सौन्दरा° P. °काव्ये LP.

## CANTO XVII

अथैवमादेशिततत्त्वमार्गो नन्दस्तदा प्राप्तविमोक्षमार्गः ।
सर्वेण भावेन गुरौ प्रणम्य क्लेशप्रहाणाय वनं जगाम ॥१॥
तत्रावकाशं मृदुनीलशष्पं ददर्श शान्तं तरुषण्डवन्तं ।
निःशब्दया निम्नगयोपगूढं वैडूर्यनीलोदकया वहन्त्या ॥२॥
स पादयोस्तत्र विधाय शौचं शुचौ शिवे श्रीमति वृक्षमूले ।
मोक्षाय बद्धा व्यवसायकक्षां पर्यङ्कमङ्कावहितं बबन्ध ॥३॥
ऋजुं समग्रं प्रणिधाय कायं काये स्मृतिं चाभिमुखीं विधाय ।
सर्वेन्द्रियाण्यात्मनि संनिधाय स तत्र योगं प्रयतः प्रपेदे ॥४॥
ततः स तत्त्वं निखिलं चिकीर्षुर्मोक्षानुकूलांश्च विधींश्चिकीर्षन् ।
ज्ञानेन लोक्येन शमेन चैव चचार चेतःपरिकर्मभूमौ ॥५॥
संधाय धैर्यं प्रणिधाय वीर्यं व्यपोह्य सक्तिं परिगृह्य शक्तिं ।
प्रशान्तचेता नियमस्थचेताः स्वस्थस्ततोऽभूद्विषयेष्वनास्थः ॥६॥
आतप्तबुद्धेः प्रहितात्मनोऽपि स्वभ्यस्तभावादथ कामसंज्ञा ।
पर्याकुलं तस्य मनश्चकार प्रावृट्सु विद्युज्जलमागतेव ॥७॥

L has 1 a 1-b 6, b 7-b 11 p, c 1-2 c 5, c 6-c 10 p, c 11-d 3, d 4-d 5 p, d 6-d 9 f, 3 a 2-a 3 f, a 4-a 5, a 6-a 7 f, c 1 c 3 f, d 7 p, d 8-4 a 10, a 11-b 5 p, b 6-c 2, c 3 c 5 p, d 7-d 8 p, 6 a 7-b 3, (fol 30 b) 6 b 5-b 10 f, b 11 p, c 1-c 5, c 6-c 11 p, d 1 f, 7 a 3-a 4 p

1 b, प्रत्न° P. 2 a, तथावमासं P. c, निशब्दया P 3 b, शिव P. c, बध्वा P. °कक्षां P. d, पर्यंमंकाय° P. 4 a, राज्यंसमग्रं P. b, °मुखी P. 5 a b, निखिलंचिकीर्षुमोक्षा° P, निखिलं तितीर्षुर्मो° Gu. b, विधीश्चि° P c, ध्यानेन शीलेन G. 6 a, धैर्यंप्रणिधायवीर्यं P b, सक्ति P (for सक्तिं). d, P om. भू° Cc. 7 c, पर्याकुलं P.

स पर्यवस्थानमवेत्य सद्यश्चिक्षेप तां धर्मविघातकर्त्रीं ।
प्रियामपि क्रोधपरीतचेता नारीमिवोद्वृत्तगुणां मनस्वी ॥८॥
आरब्धवीर्यस्य मनःशमाय भूयस्तु तस्याकुशलो वितर्कः ।
व्याधिप्रणाशाय निविष्टबुद्धेरुपद्रवो घोर इवाजगाम ॥९॥
स तद्विघाताय निमित्तमन्यद्योगानुकूलं कुशलं प्रपेदे ।
आर्तायनं क्षीणबलो बलस्थं निरस्यमानो बलिनारिणेव ॥१०॥
पुरं विधायानुविधाय दण्डं मित्राणि संगृह्य रिपून्विगृह्य ।
राजा यथाप्नोति हि गामपूर्वां नीतिर्मुमुक्षोरपि सैव योगे ॥११॥
विमोक्षकामस्य हि योगिनोऽपि मनः पुरं ज्ञानविधिश्च दण्डः ।
गुणाश्च मित्राण्यरयश्च दोषा भूमिर्विमुक्तिर्यतते यदर्थं ॥१२॥
स दुःखजालान्महतो मुमुक्षुर्विमोक्षमार्गाधिगमे विविक्षुः ।
पन्थानमार्यं परमं दिदृक्षुः शमं ययौ किंचिदुपात्तचक्षुः ॥१३॥
यः स्यान्निकेतस्तमसोऽनिकेतः श्रुत्वापि तत्त्वं स भवेत्प्रमत्तः ।
यस्मात्तु मोक्षाय स पात्रभूतस्तस्मान्मनः स्वात्मनि संजहार ॥१४॥
संभारतः प्रत्ययतः स्वभावादास्वादतो दोषविशेषतश्च ।
अथात्मवान्निःसरणात्मतश्च धर्मेषु चक्रे विधिवत्परीक्षां ॥१५॥
स रूपिणं कृत्स्नमरूपिणं च सारं दिदृक्षुर्विचिकाय कायं ।
अथाशुचिं दुःखमनित्यमस्वं निरात्मकं चैव चिकाय कायं ॥१६॥

L has 8 b 4-b 7 f, b 8-9 a 11, b 1-b 6 p, b 7-b 11, c 1-c 3 p, c 4-c 7 f, c 8 d 1, d 2 p, 10 a 9 a 11 f, c 1-c 4 f, c 5 12 b 11, c 1-c 6 p, c 7-16 d 11

9 c, निरुद्ध° P. 10 b, प्रयेदे P. d, निरस्यमाणो P. 11 c, गामपूर्वा P. 13 a b, °जालात्महतोमुमुक्षुर्विमोक्षमार्गाधिगमे P. c, °मार्य P. d, ग्रामं P. °दुपात्तचक्षुः P. 14 a, स्याद्वि° P. b, भवेत्प्र° L. c, तस्मात्तु P. c d, पात्र(?)भूतस्तस्मात्मनः P.

अनित्यतस्तच्च हि शून्यतश्च निरात्मतो दुःखत एव चापि ।
मार्गप्रवेकेण स लौकिकेन क्लेशद्रुमं संचलयांचकार ॥१७॥

यस्मादभूत्वा भवतीह सर्वं भूत्वा च भूयो न भवत्यवश्यं ।
सहेतुकं च क्षयिहेतुमच्च तस्मादनित्यं जगदित्यविन्दत् ॥१८॥

यतः प्रसूतस्य च कर्मयोगः प्रसज्यते बन्धविघातहेतुः ।
दुःखप्रतीकारविधौ सुखाख्ये ततो भवं दुःखमिति व्यपश्यत् ॥१९॥

यतश्च संस्कारगतं विविक्तं न कारकः कश्चन वेदको वा ।
सामग्र्यतः संभवति प्रवृत्तिः शून्यं ततो लोकमिमं ददर्श ॥२०॥

यस्मान्निरीहं जगदस्वतन्त्रं नैश्वर्यमेकः कुरुते क्रियासु ।
तत्तत्प्रतीत्य प्रभवन्ति भावा निरात्मकं तेन विवेद लोकं ॥२१॥

ततः स वातं व्यजनादिवोष्णे काष्ठाश्रितं निर्मथनादिवाग्निं ।
अन्तःक्षितिस्थं खननादिवाम्भो लोकोत्तरं वर्त्म दुरापमाप ॥२२॥

सज्ज्ञानचापः स्मृतिवर्म बद्ध्वा विशुद्धशीलव्रतवाहनस्थः ।
क्लेशारिभिश्चित्तरणाजिरस्थैः सार्धं युयुत्सुर्विजयाय तस्थौ ॥२३॥

ततः स बोध्यङ्गशिताात्तशस्त्रः सम्यक्प्रधानोत्तमवाहनस्थः ।
मार्गाङ्गमातङ्गवता बलेन शनैः शनैः क्लेशचमूं जगाहे ॥२४॥

स स्मृत्युपस्थानमयैः पृषत्कैः शत्रून्विपर्यासमयान् क्षणेन ।
दुःखस्य हेतूंश्चतुरश्चतुर्भिः स्वैः स्वैः प्रचारायतनैर्ददार ॥२५॥

L has 17 a 1 19 c 1, (fol 31 a) 19 c 2-25 d 11

17 c, °वेकेम LP  18 b, भत्सवश्यं P (one syllable short)  c, °क्षयपसिहेतु° P.
19 c, सुखाख्यं LP ; G c  20 c, प्रवृत्तिः L.  21 b, भैश्वर्यमेक PG  c, तत्तत्प्र° LP.
22 a, व्यंजना° P.  b, °दिवापि P  d, दुरापमाय P  23 a, सज्ज्ञानचाप L, संज्ञानचाप P ; H.c.  c d, °जिरस्थैःसार्धंयुयुत्सुर्वि° P  24 b, °वाहस्थः P.
25 b, L om न् and has it above in later hand  c, हेतुंच° LP  d, °तनैद्ददार P.

आर्यैर्बलैः पञ्चभिरेव पञ्च चेतःखिलान्यप्रतिमैर्बभञ्ज ।
मिथ्याङ्गनागांश्च तथाङ्गनागैर्विनिर्दुधावाष्टभिरेव सोऽष्टौ ॥२६॥
अथात्मदृष्टिं सकलां विधूय चतुर्षु सत्येष्वकथंकथः सन् ।
विशुद्धशीलव्रतदृष्टधर्मा धर्मस्य पूर्वां फलभूमिमाप ॥२७॥
स दर्शनादार्यचतुष्टयस्य क्लेशैकदेशस्य च विप्रयोगात् ।
प्रत्यात्मिकाच्चापि विशेषलाभात्प्रत्यक्षतो ज्ञानिसुखस्य चैव ॥२८॥
दार्ढ्यात्प्रसादस्य धृतेः स्थिरत्वात्सत्येष्वसंमूढतया चतुर्षु ।
शीलस्य चाच्छिद्रतयोत्तमस्य निःसंशयो धर्मविधौ बभूव ॥२९॥
कुदृष्टिजालेन स विप्रयुक्तो लोकं तथाभूतमवेक्षमाणः ।
ज्ञानाश्रयां प्रीतिमुपाजगाम भूयः प्रसादं च गुरावियाय ॥३०॥
यो हि प्रवृत्तिं नियतामवैति नैवान्यहेतोरिह नाप्यहेतोः ।
प्रतीत्य तत्तत्समवैति तत्तत्स नैष्ठिकं पश्यति धर्ममार्यं ॥३१॥
शान्तं शिवं निर्जरसं विरागं निःश्रेयसं पश्यति यश्च धर्मं ।
तस्योपदेष्टारमथार्यवर्यं स प्रेक्षते बुद्धमवाप्तचक्षुः ॥३२॥
यथोपदेशेन शिवेन मुक्तो रोगादरोगो भिषजं कृतज्ञः ।
अनुस्मरन्पश्यति चित्तदृष्ट्या मैत्र्या च शास्त्रज्ञतया च तुष्टः ॥३३॥

L has 26 a 1–27 d 11, 28 a 1–a 3 p, a 4–a 8, a 9–a 11 f, b 1–b 8 p, b 9–29 b 4, b 6–d 6, d 7–d 8 p, d 9–30 a 6 f, a 7–a 8, a 9 a 11 f, c 1–c 2 f, d 11–31 a 1 f, b 1–b 7 f, b 8–d 1, d 2–d 9 f, d 11 f, 32 a 1–a 5, a 6–a 9 f, 33 c 11 p, d 1–d 11.

26 a, पचभिरेव P. b, चेतखि° P. °र्ब्बंभंजः P. c, मिथ्यांगणागांश्चतथागनागै° P. d, °धावायुभिरेव P. 27 a, °दृष्टिसकला P. 28 c, प्रत्यात्मकाञ्चापि O d, ज्ञान° PC. 29 a, धृते LP. b, °त्सत्येष्टसं° P. 30 b, °मानः(m) P. 31 a, प्रवृर्त्ति P. °मवेति P. c, P om. तत्त. °मवेति P. 32 a, निज्जरसं P. d, प्रेचेत P. 33 a, P om चे; O c. d, शास्त्रिज्ञ° LP; H.c.

आर्येण मार्गेण तथैव मुक्तस्तथागतं तत्त्वविदार्यतत्त्वः ।
अनुस्मरन्पश्यति कायसाक्षी मैत्र्या च सर्वज्ञतया च तुष्टः ॥३४॥
स नाशकैर्दृष्टिगतैर्विमुक्तः पर्यन्तमालोक्य पुनर्भवस्य ।
भक्त्वा घृणां क्लेशविजृम्भितेषु मृत्योर्न तत्रास न दुर्गतिभ्यः ॥३५॥
त्वक्स्नायुमेदोरुधिरास्थिमांसकेशादिनामेध्यगणेन पूर्णं ।
ततः स कायं समवेक्षमाणः सारं विचिन्वन्नाण्वपि नोपलेभे ॥३६॥
स कामरागप्रतिघौ स्थिरात्मा तेनैव योगेन तनू चकार ।
कृत्वा महोरस्कतनुस्तनू तौ प्राप द्वितीयं फलमार्यधर्मे ॥३७॥
स लोभचापं परिकल्पबाणं रागं महावैरिणमल्पशेषं ।
कायस्वभावाधिगतैर्बिभेद योगायुधास्त्रैरशुभापृषत्कैः ॥३८॥
द्वेषायुधं क्रोधविकीर्णबाणं व्यापादमन्तःप्रभवं सपत्नं ।
मैत्रीपृषत्कैर्धृतितूणसंस्थैः क्षमाधनुर्ज्याविसृतैर्जघान ॥३९॥
मूलान्यथ त्रीण्यशुभस्य वीरस्त्रिभिर्विमोक्षायतनैश्चकर्त ।
चमूमुखस्थान्धृतकार्मुकांस्त्रीनरीनिवारिस्त्रिभिरायसाग्रैः ॥४०॥
स कामधातोः समतिक्रमाय पार्ष्णिग्रहांस्तानभिभूय शत्रून् ।
योगादनागामिफलं प्रपद्य द्वारीव निर्वाणपुरस्य तस्थौ ॥४१॥

Lac. (fol. 31 b) 34 b 1–b 8 P, 36 a 7–a 8 f, a 9–a 10 P, a 11–b 11, c 3–37 a 1, a 2–a 6 f, a 9 b 2 f, b 3–b 4, b 5–b 6 f, b 8 f, c 8–c 11 f, 39 a 8–a 10 f, c 3–c 5 f, c 6–40 a 7, a 8–a 9 f, a 10–b 3 P, b 4–41 d 11.

34 a. मार्गेण P. b. °द्दार्यतत्त्वं O. 35 b. P om. भ ; C.r. पुनर्भवस्य P. c. भक्तेपुघाक्लिशविजृ(?)म्भितेषु P, भक्ते घृणाक्लेशविजृम्भितेषु C 36 a. °स्थिमांस° P b. पूर्णं P. c. काय P. °सारं P. d. °न्न्याख(? or स्त्र)पि P. 37 a. °प्रतिघो P. d. प्राप P. °र्यधर्मे P. 38 a. परिकल्प° P c. °भावाधिग° P 39 c. °धृति-गुण° P. 40 b. °र्निविमोक्षा° P. c d. °स्त्रीनरी° P. 41 b. °महांस्तानभिभूय P. d. द्वारीव P

कामैर्विविक्तं मलिनैश्च धर्मैर्वितर्कवच्चापि विचारवच्च ।
विवेकजं प्रीतिसुखोपपन्नं ध्यानं ततः स प्रथमं प्रपेदे ॥४२॥
कामाग्निदाहेन स विप्रमुक्तो ह्लादं परं ध्यानसुखादवाप ।
सुखं विगाह्याप्स्विव घर्मखिन्नः प्राप्येव चार्थं विपुलं दरिद्रः ॥४३॥
तत्रापि तद्धर्मगतान्वितर्कान् गुणागुणे च प्रसृतान्विचारान् ।
बुद्ध्वा मनःक्षोभकरानशान्तांस्तद्विप्रयोगाय मतिं चकार ॥४४॥
क्षोभं प्रकुर्वन्ति यथोर्मयो हि धीरप्रसन्नाम्बुवहस्य सिन्धोः ।
एकाग्रभूतस्य तथोर्मिभूताश्चित्ताम्भसः क्षोभकरा वितर्काः ॥४५॥
खिन्नस्य सुप्तस्य च निर्वृतस्य बाधं यथा संजनयन्ति शब्दाः ।
अध्यात्ममैकाग्र्यमुपागतस्य भवन्ति बाधाय तथा वितर्काः ॥४६॥
अथावितर्कं क्रमशोऽविचारमेकाग्रभावान्मनसः प्रसन्नं ।
समाधिजं प्रीतिसुखं द्वितीयं ध्यानं तदाध्यात्मशिवं स दध्यौ ॥४७॥
तद्ध्यानमागम्य च चित्तमौनं लेभे परां प्रीतिमलब्धपूर्वां ।
प्रीतौ तु तत्रापि स दोषदर्शी यथा वितर्केष्वभवत्तथैव ॥४८॥
प्रीतिः परा वस्तुनि यत्र यस्य विपर्ययात्तस्य हि तत्र दुःखं ।
प्रीतावतः प्रेक्ष्य स तत्र दोषान्प्रीतिक्षये योगमुपारुरोह ॥४९॥
प्रीतेर्विरागात्सुखमार्यजुष्टं कायेन विन्दन्नथ संप्रजानन् ।
उपेक्षकः स स्मृतिमान्व्यहार्षीद्ध्यानं तृतीयं प्रतिलभ्य धीरः ॥५०॥

L has 42 a 1–48 b 2 (fol 32 a) 48 b 3 b 8 b 9–c 2 p c 3–d 4, d 5–d 9 f, 49 a 8–a 11 f, 50 c 1–c 4 f, c 5–d 11

42 a 1, धर्मैवि° P  43 a कामाग्निदेहेन LPC  d, चार्थविपन P  44 a °तर्क्का P  d चकार° P  45 d °श्चित्ताम्भसः LPC, G c  46 b बाधां LPC, G c  47 a b °चारमेकाग्र° L, °चारमेकाग्रभावात्मनसः P  48 b, °मलब्ध° P  49 a, प्रीतिपरावस्तुति P  c प्रीतीवत प्रेक्ष्य P, G c  50 a °रागात्सुख° P  c d °हार्षीत्ध्यान P.

यस्मात्परं तत्र सुखं सुखेभ्यस्ततः परं नास्ति सुखप्रवृत्तिः ।
तस्माद्बभाषे शुभकृत्स्नभूमिं परापरज्ञः परमेति मैत्र्या ॥५१॥
ध्यानेऽपि तत्राथ ददर्श दोषं मेने परं शान्तमनिञ्जमेव ।
आभोगतोऽपीञ्जयति स्म तस्य चित्तं प्रवृत्तं सुखमित्यजस्रं ॥५२॥
यत्रेञ्जितं स्पन्दितमस्ति तत्र यत्रास्ति च स्पन्दितमस्ति दुःखं ।
यस्मादतस्तत्सुखमिञ्जकत्वात्प्रशान्तिकामा यतयस्त्यजन्ति ॥५३॥
अथ प्रहाणात्सुखदुःखयोश्च मनोविकारस्य च पूर्वमेव ।
दध्यावुपेक्षास्मृतिमद्विशुद्धं ध्यानं तथादुःखसुखं चतुर्थं ॥५४॥
यस्मात्तु तस्मिन्न सुखं न दुःखं ज्ञानं च तत्रास्ति तदर्थचारि ।
तस्मादुपेक्षास्मृतिपारिशुद्धिर्निरुच्यते ध्यानविधौ चतुर्थे ॥५५॥
ध्यानं स निश्रित्य ततश्चतुर्थमर्हत्त्वलाभाय मतिं चकार ।
संधाय मैत्रं बलवन्तमार्यं राजेव देशानजितान् जिगीषुः ॥५६॥
चिच्छेद कार्त्स्न्येन ततः स पञ्च प्रज्ञासिना भावनयेरितेन ।
ऊर्ध्वंगमान्युत्तमबन्धनानि संयोजनान्युत्तमबन्धनानि ॥५७॥
बोध्यङ्गनागैरपि सप्तभिः स सप्तैव चित्तानुशयान्ममर्द ।
द्वीपानिवोपस्थितविप्रणाशान् कालो ग्रहैः सप्तभिरेव सप्त ॥५८॥
अग्निद्रुमाज्याम्बुषु या हि वृत्तिः कबन्धवाय्वग्निदिवाकराणां ।
दोषेषु तां वृत्तिमियाय नन्दो निर्वापणोत्पाटनदाहशोषैः ॥५९॥

L has 51 a 1–c 2, c 3–c 5 p, c 6–c 11, d 1–d 5 p, d 11 f, 52 a 1–a 5 p, a 6–b 5 f, b 10–c 2 f, c 5–c 6 f, d 5–d 7 f, d 8–d 10 p, d 11–59 d 11.

51 a, सुखेभ्यस्ततः P. d, मैत्रां or मैत्रीं G 52 b, शान्तिम° PC; G c c, °पीञ्जयति P. 53 a, यत्रेजितं P c, यस्माद° P. °मिञ्जकत्वात्प्र° P. 54 a, प्रहाणा(m)त्सु° P. d, चतुर्थ P. 55 a, यस्मात्तु P 56 a, निःश्रित्य L, तिःश्रेत्य P. c, मित्रं L, सत्वायमित्रं P d, °जिताजिगीषुः P 57 a, कार्त्स्नेन P b, °येरितेव P. c, ऊर्द्धग° P. d, °बद्धनानि P. 58 a, °नागैरपि P a b, L om स, सस्तप्तैव P. b, °शयान्मर्द्द P. c, °विप्रनाशात् P 59 b, °करणा L

इति त्रिवेगं त्रिझषं त्रिवीचमेकाम्भसं पञ्चरयं द्विकूलं ।
द्विग्राहमष्टाङ्गवता प्लवेन दुःखार्णवं दुस्तरमुत्ततार ॥६०॥
अर्हत्त्वमासाद्य स सत्क्रियार्हो निरुत्सुको निष्प्रणयो निराशः ।
विभीर्विशुग्वीतमदो विरागः स एव धृत्यान्य इवाबभासे ॥६१॥
भ्रातुश्च शास्तुश्च तयानुशिष्ट्या नन्दस्ततः स्वेन च विक्रमेण ।
प्रशान्तचेताः परिपूर्णकार्यो वाणीमिमामात्मगतां जगाद ॥६२॥
नमोऽस्तु तस्मै सुगताय येन हितैषिणा मे करुणात्मकेन ।
वहूनि दुःखान्यपवर्तितानि सुखानि भूयांस्युपसंहृतानि ॥६३॥
अहं ह्यनार्येण शरीरजेन दुःखात्मके वर्त्मनि कृष्यमाणः ।
निवर्तितस्तद्वचनाङ्कुशेन दर्पान्वितो नाग इवाङ्कुशेन ॥६४॥
तस्याज्ञया कारुणिकस्य शास्तुर्हृदिस्थमुत्पाट्य हि रागशल्यं ।
अद्यैव तावत्सुमहत्सुखं मे सर्वक्षये किंवत निर्वृतस्य ॥६५॥
निर्वाप्य कामाग्निमहं हि दीप्तं धृत्यम्बुना पावकमम्बुनेव ।
ह्लादं परं सांप्रतमागतोऽस्मि शीतं ह्रदं घर्म इवावतीर्णः ॥६६॥
न मे प्रियं किंचन नाप्रियं मे न मेऽनुरोधोऽस्ति कुतो विरोधः ।
तयोरभावात्सुखितोऽस्मि सद्यो हिमातपाभ्यामिव विप्रमुक्तः ॥६७॥
महाभयात्क्षेममिवोपलभ्य महावरोधादिव विप्रमोक्षं ।
महार्णवात्पारमिवाप्लवः सन्भीमान्धकारादिव च प्रकाशं ॥६८॥

L has 60 a 1–62 d 8, (fol. 32 b) 62 d 9–68 d 11.

60 a, त्रिवगं P b, °मेकामसंपंचरगद्विकुलं P. c, द्विग्धा(या)ह° L, द्विग्याह° P. 61 a, चर्हन्त्वमामासाद्य P 62 c, °काद्यो P, °काम्यो C. d, जगद् L. 63 b, P om मे c, °वर्त्तितानि P 64 b, वत्मनिकृष्यमाणः P. c, °नाकुशेन P. d, इवा-कुशेन P. 68 a, °भयान्क्षेम° L. b, महावरोधादि° P. c d, सन्नीमा° P.

रोगादिवारोग्यमसह्यरूपादृणादिवानृण्यमनन्तसंख्यात् ।
द्विषत्सकाशादिव चापयानं दुर्भिक्षयोगाच्च यथा सुभिक्षं ॥६९॥
तद्वत्परां शान्तिमुपागतोऽहं यस्यानुभावेन विनायकस्य ।
करोमि भूयः पुनरुक्तमस्मै नमो नमोऽर्हाय तथागताय ॥७०॥

येनाहं गिरिमुपनीय रुक्मशृङ्गं
स्वर्गं च प्लवगवधूनिदर्शनेन ।
कामात्मा त्रिदिवचरीभिरङ्गनाभि-
र्निष्कृष्टो युवतिमये कलौ निमग्नः ॥७१॥

तस्माच्च व्यसनपरादनर्थपङ्का-
दुत्कृष्य क्रमशिथिलः करीव पङ्कात् ।
शान्तेऽस्मिन्विरजसि विज्वरे विशोके
सद्धर्मे वितमसि नैष्ठिके विमुक्तः ॥७२॥

तं वन्दे परमनुकम्पकं महर्षिं
मूर्ध्नाहं प्रकृतिगुणज्ञमाशयज्ञं ।
संबुद्धं दशबलिनं भिषक्प्रधानं
त्रातारं पुनरपि चास्मि संनतस्तं ॥७३॥

महाकाव्ये सौन्दरनन्देऽमृताधिगमो नाम सप्तदशः सर्गः ।

L has 69 a 1–73 a 13, b 1–b 3 p, b 4–b 6 f, b 11–b 12 f, b 13 p, c 1–c 2, c 3–c 5 f, *d 7–d 9 f, d 11–d 13 f, col, all*

71 d, °न्निष्क(ष्कि)ष्टो L, °न्निष्क्रिष्टो P    72 d, सधर्म्मे P.    73 a b, परमनुकं-महर्षिमूर्द्धाह P    c, भिषकृप(or क्य)धानं P    col, श्रीआचार्याश्वघोषशतीमहा° P, **तो(?)महा° L.  सौन्दरा° P  °नन्दे अमृता° LP

## CANTO XVIII

अथ द्विजो बाल इवाप्तवेदः क्षिप्रं वणिक् प्राप्त इवाप्तलाभः।
जित्वा च राजन्य इवारिसैन्यं नन्दः कृतार्थो गुरुमभ्यगच्छत् ॥१॥
द्रष्टुं सुखं ज्ञानसमाप्तिकाले गुरुर्हि शिष्यस्य गुरोश्च शिष्यः।
परिश्रमस्ते सफलो मयीति यतो दिदृक्षास्य मुनौ बभूव ॥२॥
यतो हि येनाधिगतो विशेषस्तस्योत्तमाङ्गेऽर्हति कर्तुमिज्याम्।
आर्यः सरागोऽपि कृतज्ञभावात्प्रक्षीणमानः किमु वीतरागः ॥३॥
यस्यार्थकामप्रभवा हि भक्तिस्ततोऽस्य सा तिष्ठति रूढमूला।
धर्मान्वयो यस्य तु भक्तिरागस्तस्य प्रसादो हृदयावगाढः ॥४॥
काषायवासाः कनकावदातस्ततः स मूर्ध्ना गुरवे प्रणेमे।
वातेरितः पल्लवताम्ररागः पुष्पोज्ज्वलश्रीरिव कर्णिकारः ॥५॥
अथात्मनः शिष्यगुणस्य चैव महामुनेः शास्तृगुणस्य चैव।
संदर्शनार्थं स न मानहेतोः स्वां कार्यसिद्धिं कथयांबभूव ॥६॥
या दृष्टिशल्यो हृदयावगाढः प्रभो भृशं मामतुदत्सुतीक्ष्णः।
त्वद्वाक्यसंदंशमुखेन मे स समुद्धृतः शल्यहृतेव शल्यः ॥७॥

I has 1a1–a10 a11 b2f b11–c1f 2c10–c11f d1–d11 (fol 33a) 5c4f
c5–c6p c7–c11 d1–d4f 7c10p c11–d4 d5–d8p d9–d11

1ab इवाप्तिवेद् चिप्र P  b इवापुनाभ P  c जित्वा P  इवारिसैन्यं P
2a द्रष्टुमुप P द्रष्टु सुखं C  Gc  c P om स  Cc  3a येनाविगतो P
b °त्तमाङ्गोऽर्हतिकर्तुमिज्यां P °त्तमां सोऽर्हति कर्त्तुमीज्यां C  cd °भावात्प्रक्षी° P
d किमु I  4a यस्यार्थकाम° PC  b °स्त (or मु) तस्तस्मा I  5b मूर्धा P
d पुष्पोज्ज्वलश्रीरिवकर्णि° I  6a चैव P  b °मुनेरग(?)स्तृ° P  c संदर्शनार्थ P
d कथयांबभूव I  7b भृशमामतुदत्सुतीक्ष्णः P  Cc  c °संदर्शमुखेन P; Cc
स LP  d P om स

कथंकथाभावगतोऽस्मि येन छिन्नः स निःसंशय संशयो मे ।
त्वच्छासनात्सत्पथमागतोऽस्मि सुदेशिकस्येव पथि प्रनष्टः ॥८॥
यत्पीतमास्वादवशेन्द्रियेण दर्पेण कन्दर्पविषं मयासीत् ।
तन्मे हतं त्वद्वचनागदेन विषं विनाशीव महागदेन ॥९॥
क्षयं गतं जन्म निरस्तजन्मन्सद्धर्मचर्यामुषितोऽस्मि सम्यक् ।
कृत्स्नं कृतं मे कृतकार्य कार्यं लोकेषु भूतोऽस्मि न लोकधर्मा ॥१०॥
मैत्रीस्तनीं व्यञ्जनचारुसास्नां सद्धर्मदुग्धां प्रतिभानशृङ्गां ।
तवास्मि गां साधु निपीय तृप्तस्तृषेव गामुत्तमवत्सवर्णः ॥११॥
यत्पश्यतश्चाधिगमो ममायं तन्मे समासेन मुने निबोध ।
सर्वज्ञ कामं विदितं तवैतत्स्वं तूपचारं प्रविवक्षुरस्मि ॥१२॥
अन्येऽपि सन्तो विमुमुक्षवो हि श्रुत्वा विमोक्षाय नयं परस्य ।
मुक्तस्य रोगादिव रोगवन्तस्तेनैव मार्गेण सुखं घटन्ते ॥१३॥
उर्व्यादिकान् जन्मनि वेद्मि धातून्नात्मानमुर्व्यादिषु तेषु किंचित् ।
यस्मादतस्तेषु न मेऽस्ति सक्तिर्बहिश्च कायेन समा मतिर्मे ॥१४॥
स्कन्धांश्च रूपप्रभृतीन्दशार्धान्पश्यामि यस्माच्चपलानसारान् ।
अनात्मकांश्चैव वधात्मकांश्च तस्माद्विमुक्तोऽस्म्यशिवेभ्य एभ्यः ॥१५॥

L has 8 a 1–a 11, b 1–b 4 p, b 5–b 9 f, b 10–b 11, c 1–c 3 p, c 4–d 1 f, d 2–d 8, d 9–9 b 1 p, b 2–c 9, d 4, d 5–d 8 f, 10 a 1–15 d 11.

8 a, कथंकथीभाव° L  b, निःससयसंसयो P  c, °त्सत्पथयाग° P  9 b, मयाशीत् P.  c, हतत्वंद्व° P.  d, विषविनासीव P.  10 a b, °जन्मसद्ध° LP, G c  b, संम्यक् P.  d, लोके*(प्र)भूतो L, लोकस्तभूतो P, लोके प्रभूतो C, प्रसूतो G  11 a, मैत्रीमुनि P °चारुसा(m)स्तां P  b, सधर्म्म° P  c, गा P  c d, तृप्तंतृषेव P  d, °वर्णा G.  12 a, °श्चाविगमो P  मयायं PC and prob L, H c  13 d, घटान्त P.  14 a, उर्व्यादिचाज° P.  b, °न्नाध्या(? or ध्मा)नमुर्व्या° P  कचित् G  c, यस्माद° P.  नमिस्ति L  शक्तिर्ब° P and poss L, G c  15 a, स्कंधाश्च P.  b, °लानसरान् L, °लानसर्व(व)ान् P  c, अनात्मकाश्चैव LP

यस्माच्च पश्याम्युदयं व्ययं च सर्वास्ववस्थास्वहमिन्द्रियाणां ।
तस्मादनित्येषु निरात्मकेषु दुःखेषु मे तेष्वपि नास्ति संगः ॥१६॥
यतश्च लोकं समजन्मनिष्ठं पश्यामि निःसारमसच्च सर्वं ।
अतो धिया मे मनसा विबद्धमस्मीति मे नेञ्जितमस्ति येन ॥१७॥
चतुर्विधे नैकविधप्रसंगे यतोऽहमाहारविधावसक्तः ।
अमूर्छितश्चाग्रथितश्च तत्र त्रिभ्यो विमुक्तोऽस्मि ततो भवेभ्यः ॥१८॥
अनिश्रितश्चाप्रतिबद्धचित्तो दृष्टश्रुतादौ व्यवहारधर्मे ।
यस्मात्समात्मानुगतश्च तत्र तस्माद्विसंयोगगतोऽस्मि मुक्तः ॥१९॥
इत्येवमुक्त्वा गुरुबाहुमान्यात्सर्वेण कायेन स गां निपन्नः ।
प्रवेरितो लोहितचन्दनाक्तो हैमो महास्तम्भ इवाबभासे ॥२०॥
ततः प्रमादात्प्रसृतस्य पूर्वं श्रुत्वा धृतिं व्याकरणं च तस्य ।
धर्मान्वयं चानुगतं प्रसादं मेघस्वरस्तं मुनिराबभाषे ॥२१॥
उत्तिष्ठ धर्मे स्थित शिष्यजुष्टे किं पादयोर्मे पतितोऽसि मूर्ध्ना ।
अभ्यर्चनं मे न तथा प्रणामो धर्मे यथैषा प्रतिपत्तिरेव ॥२२॥
अद्यासि सुप्रव्रजितो जितात्मन्नैश्वर्यमप्यात्मनि येन लब्धं ।
जितात्मनः प्रव्रजनं हि साधु चलात्मनो न त्वजितेन्द्रियस्य ॥२३॥
अद्यासि शौचेन परेण युक्तो वाक्कायचेतांसि शुचीनि यत्ते ।
अतः पुनश्चाप्रयतामसौम्यां यत्सौम्य नो वेक्ष्यसि गर्भशय्यां ॥२४॥

L has 16 a 1–d 6, (fol. 33 b) 16 d 7–23 c 8, c 9–d 2 f, d 3–24 d 8, d 9–d 11 p.

16 a, L om. व्ययं, °द्यंचसत्वा P, °द्यं च साम्तं S. b, °यामां P. c, °नित्यपु P. d, राप्वपि P. 17 c, षतोधिया (or यो) P. 18 b, °हारविधारयक्त: P. 19 a, षनिःश्रित° LPC. 20 a, °वाह्र(?)मान्या° P. d, महासुंभ P. 21 a, ममादान्म° P. d, °रावमासे P. 22 b, मुर्ध्ना L, मुर्धा P. c, ममाणामो P. 24 a, पुक्ता P. c, °सौम्या P. d, यत्सौम्यतोवे° P. गर्भशर्य्या L, गर्भतर्य्या P; C c

अद्यार्थवत्ते श्रुतवच्छ्रुतं तच्छ्रुतानुरूपं प्रतिपद्य धर्मं ।
कृतश्रुतो विप्रतिपद्यमानो निन्द्यो हि निर्वीर्य इवात्तशस्त्रः ॥२५॥

अहो धृतिस्तेऽविषयात्मकस्य
यत्त्वं मतिं मोक्षविधावकार्षीः ।
यास्यामि निष्ठामिति बालिशो हि
जन्मक्षयात्त्रासमिहाभ्युपैति ॥२६॥

दिष्ट्या दुरापः क्षणसंनिपातो नायं कृतो मोहवशेन मोघः ।
उदेति दुःखेन गतो ह्यधस्तात्कूर्मो युगच्छिद्र इवार्णवस्थः ॥२७॥

निर्जित्य मारं युधि दुर्निवारमद्यासि लोके रणशीर्षशूरः ।
शूरोऽप्यशूरः स हि वेदितव्यो दोषैरमित्रैरिव हन्यते यः ॥२८॥

निर्वाप्य रागाग्निमुदीर्णमद्य दिष्ट्या सुखं स्वप्स्यसि वीतदाहः ।
दुःखं हि शेते शयनेऽप्युदारे क्लेशाग्निना चेतसि दह्यमानः ॥२९॥

अभ्युच्छ्रितो द्रव्यमदेन पूर्वमद्यासि तृष्णोपरमात्समृद्धः ।
यावत्सतर्षः पुरुषो हि लोके तावत्समृद्धोऽपि सदा दरिद्रः ॥३०॥

अद्यापदेष्टुं तव युक्तरूपं शुद्धोधनो मे नृपतिः पितेति ।
भ्रष्टस्य धर्मात्पितृभिर्निपातादश्लाघनीयो हि कुलापदेशः ॥३१॥

दिष्ट्यासि शान्तिं परमामुपेतो निस्तीर्णकान्तार इवाप्तसारः ।
सर्वो हि संसारगतो भयार्तो यथैव कान्तारगतस्तथैव ॥३२॥

L has 25 a 1–a 5 f, a 6–b 2, b 3–b 5 p, b 7–c 4 p, c 5–c 8, c 9 p, c 11–26 a 7, b 1, b 2–b 5 f, c 6–c 7 p, c 8–d 5, d 6–d 7 p, 27 a 8–a 9 f, c 1–c 3 f, 29 a 2–a 6 f, (fol. 34 a) 31 b 7–b 11 p

25 a, अद्यासवर्त्तें(त्ते) P, अद्यार्थ्यवृत्त C. d, इवान्तशस्त्रः P. 26 a, विसया° P; LPC om. avagraha d, °त्रयांचासिमि° P 27 a, अतोवियामेद्दिष्या P b, °वसेन P. d, कुर्म्मे P, कूर्मो युगच्छित्स C. 28 b, रणशाशूरः P, रणशास्त्रशूरः C; S cr d, हन्यते P. 29 b, सुख P 30 b, °मात्समृद्धेः P 31 a, आद्यापदेष्टं P, अद्योपदेष्टुं C. b, मनृप° P, which om तिःपिते. d, °श्लाघनांयो P कुलोपदेशः PC.

आरण्यकं भैक्षचरं विनीतं द्रक्ष्यामि नन्दं निभृतं कदेति ।
आसीत्पुरस्तात्त्वयि मे दिदृक्षा तथासि दिष्ट्या मम दर्शनीयः ॥३३॥
भवत्यरूपोऽपि हि दर्शनीयः स्वलंकृतः श्रेष्ठतमैर्गुणैः स्वैः ।
दोषैः परीतो मलिनीकरैस्तु सुदर्शनीयोऽपि विरूप एव ॥३४॥
अद्य प्रकृष्टा तव बुद्धिमत्ता कृत्स्नं यया ते कृतमात्मकार्यं ।
श्रुतोन्नतस्यापि हि नास्ति बुद्धिर्नोत्पद्यते श्रेयसि यस्य बुद्धिः ॥३५॥
उन्मीलितस्यापि जनस्य मध्ये निमीलितस्यापि तथैव चक्षुः ।
प्रज्ञामयं यस्य हि नास्ति चक्षुश्चक्षुर्न तस्यास्ति सचक्षुषोऽपि ॥३६॥
दुःखप्रतीकारनिमित्तमार्तः कृष्यादिभिः खेदमुपैति लोकः ।
अजस्रमागच्छति तच्च भूयो ज्ञानेन यस्याद्य कृतस्त्वयान्तः ॥३७॥
दुःखं न मे स्यात्सुखमेव मे स्यादिति प्रवृत्तः सततं हि लोकः ।
न वेत्ति तच्चैव तथा यथा स्यात्प्राप्तं त्वयाद्यासुलभं यथावत् ॥३८॥
इत्येवमादि स्थिरबुद्धिचित्तस्तथागतेनाभिहितो हिताय ।
स्तवेषु निन्दासु च निर्व्यपेक्षः कृताञ्जलिर्वाक्यमुवाच नन्दः ॥३९॥
अहो विशेषेण विशेषदर्शिंस्त्वयानुकम्पा मयि दर्शितेयं ।
यत्कामपङ्के भगवन्निमग्नस्त्रातोऽस्मि संसारभयादकामः ॥४०॥
भ्रात्रा त्वया श्रेयसि दैशिकेन पित्रा फलस्थेन तथैव मात्रा ।
हतोऽभविष्यं यदि न व्यमोक्ष्यं सार्थात्परिभ्रष्ट इवाकृतार्थः ॥४१॥

L has 33 c 5–c 9 p, d 1 p, d 2–34 a 9, a 10–b 4 p, b 7–b 11 p, 36 a 3–d 3, d 4 p, d 6 f, d 7–37 a 9 c 1–c 6 f, c 10 f, 38 b 9–39 c 9, d 5 d 8 f, d 9–40 b 7, d 9 41 d 11.

33 a, भैष्यचरं P c, °आसीत्पु° P. d, दिस्त्या P. 34 b, स्वमंकृतःश्रष्टतमैगुणैः P. 35 a b, बुद्धिमत्तोत्कृष्टस्त्व P; C.c. b, °कार्यं P. d, °र्नोत्पद्येश्रे° P. बुद्धिः P. 36 a, जनस्य मध्ये Gu b, निमीलितं चास्ति तथैव G. 38 b, सततंहि P; C.c. c, नवत्ति P. 40 b, दर्शितऽयं P. c d, °मग्नःत्रुतोऽस्मि P; C.c. 41 b, फल-स्थेन P.

शान्तस्य तुष्टस्य सुखो विवेको विज्ञाततत्त्वस्य परीक्षकस्य ।
प्रहीणमानस्य च निर्मदस्य सुखं विरागत्वमसक्तबुद्धेः ॥४२॥
अतो हि तत्त्वं परिगम्य सम्यङ्निर्धूय दोषानधिगम्य शान्तिं ।
स्वं नाश्रयं संप्रति चिन्तयामि न तं जनं नाप्सरसो न देवान् ॥४३॥
इदं हि भुक्त्वा शुचि शामिकं सुखं न मे मनः कांक्षति कामजं सुखं ।
महार्हमप्यन्नमदैवताहृतं दिवौकसो भुक्तवतः सुधामिव ॥४४॥
अहोऽन्धविज्ञाननिमीलितं जगत्पटान्तरे पश्यति नोत्तमं सुखं ।
सुधीरमध्यात्मसुखं व्यपास्य हि श्रमं तथा कामसुखार्थमृच्छति ॥४५॥
यथा हि रत्नाकरमेत्य दुर्मतिर्विहाय रत्नान्यसतो मणीन्हरेत् ।
अपास्य संबोधिसुखं तथोत्तमं श्रमं व्रजेत्कामसुखोपलब्धये ॥४६॥
अहो हि सत्त्वेष्वतिमैत्रचेतसस्तथागतस्यानुजिघृक्षुता परा ।
अपास्य यद्ध्यानसुखं मुने परं परस्य दुःखोपरमाय खिद्यसे ॥४७॥
मया नु शक्यं प्रतिकर्तुमद्य किं गुरौ हितैषिण्यनुकम्पके त्वयि ।
समुद्धृतो येन भवार्णवादहं महार्णवाच्चूर्णितनौरिवोर्मिभिः ॥४८॥
ततो मुनिस्तस्य निशम्य हेतुमत्प्रहीणसर्वास्रवसूचकं वचः ।
इदं बभाषे वदतामनुत्तमो यदर्हति श्रीघन एव भाषितुं ॥४९॥
इदं कृतार्थः परमार्थवित्कृती त्वमेव धीमन्नभिधातुमर्हसि ।
अतीत्य कान्तारमवाप्तसाधनः सुदेशिकस्येव कृतं महावणिक् ॥५०॥

L has 42 a 1–d 6, d 7 f, 43 b 5–45 a 9 (fol 34 b) 45 c 8 47 c 1, c 2 p, d 10 49 d 5, 50 b 2 d 12

42 d, °मेघ्रात्त° P 43 a, P om तो, श्रथो C a b, सम्यक्नि° P c, स्वनाश्रम LPC, स्व भ श्रम G, S c 44 b, मन P, which om b entirely and has it added in a Devanāgarī hand above d, भुक्तवतत् P 45 c, स्वधीनम° P d, °र्थमुर्च्छति P. 46 d, ब्रजेत्काम° L °सुखापल° P 48 a शक्तु P 49 a b हेतुमप्रहीनसर्वासुच-मुचक P 50 b, त्वेमेव P c d, °वाप्तिसाधनस्वदेशिकस्येव P

अवैति बुद्धं नरदम्यसारथिं कृती यथार्हन्नुपशान्तमानसः।
न दृष्टसत्योऽपि तथावबुध्यते पृथग्जनः किंवत बुद्धिमानपि॥५१॥
रजस्तमोभ्यां परिमुक्तचेतसस्तवैव चेयं सदृशी कृतज्ञता।
रजःप्रकर्षेण जगत्यवस्थिते कृतज्ञभावो हि कृतज्ञ दुर्लभः॥५२॥

सधर्म धर्मान्वयतो यतश्च ते
मयि प्रसादोऽधिगमे च कौशलं।
अतोऽस्ति भूयस्त्वयि मे विवक्षितं
नतो हि भक्तश्च नियोगमर्हसि॥५३॥

अवाप्तकार्योऽसि परां गतिं गतो न तेऽस्ति किंचित्करणीयमण्वपि।
अतःपरं सौम्य चरानुकम्पया विमोक्षयन् कृच्छ्रगतान्परानपि॥५४॥
इहार्थमेवारभते नरोऽधमो विमध्यमस्तूभयलौकिकीं क्रियां।
क्रियाममुत्रैव फलाय मध्यमो विशिष्टधर्मा पुनरप्रवृत्तये॥५५॥
इहोत्तमेभ्योऽपि मतः स तूत्तमो य उत्तमं धर्ममवाप्य नैष्ठिकं।
अचिन्तयित्वात्मगतं परिश्रमं शमं परेभ्योऽप्युपदेष्टुमिच्छति॥५६॥
विहाय तस्मादिह कार्यमात्मनः कुरु स्थिरात्मन्परकार्यमप्यथो।
भ्रमत्सु सत्त्वेषु तमोवृतात्मसु श्रुतप्रदीपो निशि धार्यतामयं॥५७॥
ब्रवीतु तावत्पुरि विस्मितो जनस्त्वयि स्थिते कुर्वति धर्मदेशनाः।
अहोबताश्चर्यमिदं विमुक्तये करोति रागी यदयं कथामिति॥५८॥

L has 51 a 1–b 11, c 1–52 a 7, a 8–a 9 f, c 7–53 d 1, d 2 f, d 7 f, d 8–54 a 11, d 5–d 9 p, d 12 55 b 10, b 11–c 2 p, c 4–c 5, c 6–c 9 p, c 10–c 12 f, 57 b 2–b 8 f.

51 a, °दृत्तसारथिं P. b, यथार्हंत्नु° P. °मामसं P; G.c. c, तथावबद्यत P.
52 c, रजंप्रकर्षण P. 53 b, °गमेपकौशम्नं P, प्रसादाधिगमेन S. d, मियोग° P.
54 d, विमोषयत् P. 55 a, नरोधमा P. c, मध्यमा P. 56 a, सतूमो P; G c.
c, °यित्वात्सुगतं P, °यित्वा स्वगतं H. 57 a, °मात्ममः P. d, सुतप्र° P.
58 c, °ताचर्यमिदं P, °ताचर्यमिमां G

ध्रुवं हि संश्रुत्य तव स्थिरं मनो निवृत्तनानाविषयैर्मनोरथैः ।
वधूर्गृहे सापि तवानुकुर्वती करिष्यते स्त्रीषु विरागिणीः कथाः ॥५९॥

त्वयि परमधृतौ निविष्टतत्त्वे भवनगता न हि रंस्यते ध्रुवं सा ।
मनसि शमदमात्मके विविक्ते मतिरिव कामसुखैः परीक्षकस्य ॥६०॥

इत्यर्हतः परमकारुणिकस्य शास्तु-
मूर्ध्ना वचश्च चरणौ च समं गृहीत्वा ।
स्वस्थः प्रशान्तहृदयो विनिवृत्तकार्यः
पार्श्वान्मुनेः प्रतिययौ विमदः करीव ॥६१॥

भिक्षार्थं समये विवेश स पुरं दृष्टीर्जनस्याक्षिपन्
लाभालाभसुखासुखादिषु समः स्वस्थेन्द्रियो निःस्पृहः ।
निर्मोक्षाय चकार तत्र च कथां काले जनायार्थिने
नैवोन्मार्गगतान्परान्परिभवन्नात्मानमुत्कर्षयन् ॥६२॥

इत्येषा व्युपशान्तये न रतये मोक्षार्थगर्भा कृतिः
श्रोतॄणां ग्रहणार्थमन्यमनसां काव्योपचारात्कृता ।
यन्मोक्षात्कृतमन्यदत्र हि मया तत्काव्यधर्मात्कृतं
पातुं तिक्तमिवौषधं मधुयुतं हृद्यं कथं स्यादिति ॥६३॥

L has (fol 35 a) 61 b 9–b 11 p, b 12–c 2, c 3–c 12 p, c 13 f, 62 d 15–63 a 17, a 18–b 1 p

59 a, P om. म ; C c. b, मिवृर्त्तनाना° P. c, वधुर्गृहे P. तयानुकु° P. d, कथा P. 60 c, समद्मा° P. d, °सुधेपरिचिकस्य P; C c 61 a b, शास्तुःमू° P. b, चरणो P. c, स्वस्थ P. d, पार्श्वात्मुनेः P. 62 a, भिषार्थ P. °नस्याचिपन् P. d, P om. न्परा, °न्नत्मा° C; G c. °मुत्कर्षति P. 63 b, °चारामहता P. c, यन्मोपात्कृ° P.

प्रायेणालोक्य लोकं विषयरतिपरं मोक्षात्प्रतिहतं
काव्यव्याजेन तत्त्वं कथितमिह मया मोक्षः परमिति ।
तद्बुद्ध्वा शामिकं यत्तदवहितमितो ग्राह्यं न ललितं
पांसुभ्यो धातुजेभ्यो नियतमुपकरं चामीकरमिति ॥६४॥

सौन्दरनन्दे महाकाव्य आज्ञाव्याकरणो नामाष्टादशः सर्गः ।

आर्यसुवर्णाक्षीपुत्रस्य साकेतकस्य भिक्षोराचार्यभदन्ताश्वघोषस्य
महाकवेर्महावादिनः कृतिरियं ॥

L has 64 b 1-c 2, c 3-c 9 p, and in the colophon from र्णाक्षी° to °हावा inclusive.

64 b, मोचपर° P, मोचे पर° H. d, पाशुभ्यो P. चायिकर° P, चामीकरमिव H. col., सौन्दरा° P. °काव्ये P. संकेतकस्य LP. °दशमः P. भिषोश्चीराचार्यभद° P. °वादिनकृतिरियमिति P. P adds at end सहस्रमेकंशतानिचत्वारिश्लोकः.

# NOTES

CANTO I 1 H compares *MBh* II. 698 where *tapası śranta* ıs applıed to Candakausıka son of Kākṣīvat Gautama, *tapahśranta* ıs the regular word for an ascetıc ın *BhNS*

2 Query *pratatam* ın *a*?

3 P s *havıse* ın *a* ıs agaınst the rules of thıs *vıpulā* G takes *gam* ın *b* as meanıng 'cow' and 'earth' and ın *d* as 'voıce' and 'cow' For mılkıng speech cf *Chāndogya Up* I 13

4 Dīrghatamas ıs the more usual form Āngırasa = Bṛhaspatı as ın *B* IX. 10 (Angıras wrongly ın *SBE* XLIX p 93)

7 A relatıve or *ca* ıs requıred, query *mṛdubhıś caıva taıh* ın *a*?

11 The verse ıs worded so as to suggest noıse by the secondary meanıngs, shoutıng peacocks callıng and coronatıons

13 *Kṣudıamṛga* here must mean 'beasts of prey', as G shows by many parallels, to whıch add *Jat* VI 1 (showıng *śaṣpamukhā* to be the correct emendatıon ın VI 3) *Kṣudra* and *krura* are used ınterchangeably ın the epıcs

14 As parallel passages show (e g verse 17 below and *B* VII *passım*), the poınt ıs that ascetıcısm does not lead to freedom from rebırth, therefore *apunarbhāve* ın *a* not *punarbhave* The verse refers to the defınıtıon of *pratyakṣa* as *avyabhıcārın* ('not erroneous', *Nyāyasutra* I 4), the true Yogın havıng a specıal *pratyakṣa* ı e supernatural perceptıon, these ascetıcs acted as ıf theır *pratyakṣa* was *avyabhıcarın*, though ın fact ıt was vıtıated by doubt as to theır release from rebırth and by the contradıctorıness of theır tradıtıons

15 *Mıyate* ın *a* from *mı* 'perceıve', 'grasp', ın *b* from *mī* 'ınjure', ın *c* from *mā*, *nı*+, 'reap' and ın *d* from *mī*, *pra*+, 'dıe' (H)

16 *Subuddhayah* ıs agaınst the context, as Aśvaghosa ıs makıng ıt clear that ascetıcısm ıs based on a mısconceptıon of dharma

21 *Vıṣehıre*, 'took forcıbly', ıs unusual, but cf *Kauṭ A* VII 18 35, and the phrase *durgam avıṣahyam* occurrıng several tımes ın that work Possıble emendatıons are *nābhıṣehıre* or *nābhıpedıre*

22 Thıs explanatıon agrees wıth the curıous phrase ın *Kauṭ A* I 8, *tulyaır asamānarṣıbhır vaıvāhyam* and seems to be stıll current ın Indıa (e g, J N Bhattacharjı, *Hındu Castes and Sects* Calcutta 1896, p 31)

23 The reference ıs to Krsna and Balarāma.

24 See F W Thomas, *Kavīndravacanasamuccaya* (Bıbl Ind. 1912), Introd p 29, and H for Rāyamukuta s quotatıon of thıs verse ın hıs commentary on the *Amarakośa*

प्रायेणालोक्य लोकं विषयरतिपरं मोक्षात्प्रतिहतं
काव्यव्याजेन तत्त्वं कथितमिह मया मोक्षः परमिति ।
तद्बुद्ध्वा शामिकं यत्तदवहितमितो ग्राह्यं न ललितं
पांसुभ्यो धातुजेभ्यो नियतमुपकरं चामीकरमिति ॥६४॥

सौन्दरनन्दे महाकाव्य आज्ञाव्याकरणो नामाष्टादशः सर्गः ।

आर्यसुवर्णाक्षीपुत्रस्य साकेतकस्य भिक्षोराचार्यभदन्ताश्वघोषस्य महाकवेर्महावादिनः कृतिरियं ॥

L has 64 b 1–c 2, c 3–c 9 p, and in the colophon from र्णाक्षी° to °हावा inclusive.

64 b, मोचपर° P, मोचे पर° H. d, पाम्सुभ्यो P. चायिकर° P, चामीकरमिव H. col, सौन्दरा° P. °काव्ये P. संकेतकस्य LP. °दशमः P. भिचोश्रीराचार्यभद° P. °वादिनःकृतिरियमिति P. P adds at end सहस्रमेकंशतानिचत्वारिश्लोकः.

is based on the habit of Nepali copyists of writing *rrtt* for *rtt*, *r* being easily dropped The probably later reading *nathaiat tair* requires G 's *dipyamānam* in *c* to balance it.

Canto II 2 L's *sasaje* possibly preserves a grammatical peculiarity of Aśvaghosa s.

10 For *d* cf *Sakuntalā* (ed Pischel) V 7

13 The remains in L of the fourth syllable of *c* are of a letter not occurring elsewhere, possibly *ñchi*

16 *Acaisit* 'acquired' and 'covered', is evidently right

17 *Apyāsit* is intransitive, for the man who is compassionate by nature rejoices exceedingly when he sees persons in distress on whom to exercise his compassion.

18 The text is certain except in *d* but the translation difficult To take *adidā s t* and *a litsit* as both from *dā* 'give', leaves the verse with only the antithesis between attachment to friendship and kindliness for its point *Aditsit* is clearly from *da*, 'give' The only other recorded form of *didāsa* is from *di* 'destroy (*Dhātupātha* IV 26) which the *PW* gives from Vopadeva If so the locative must be governed by *sauharda* *Maitra* is the ally by reason of long established friendship (*Kam Nitisara* (TSS no XIV) IX 21 22 and XVI 28) Translate therefore, 'Out of his firm attachment to amity with his allies by long-established friendship, however worthless they might be, he did not care to harm them but liked in his kindliness to give them his property according to their needs' The sentiment is the exact opposite of that expressed in *Kam Nitisāra* VIII 74

20 G 's conjecture in *a* seems to me certain Translate He ever scattered the *bali* offering according to rule' it has nothing to do with taxes For *apraptam* cf J J Meyer s translation of *Kaut A* p 444 n 5

23 [illegible] (from *krś*)

28-[illegible] *ttrapvino ratricarmah* of *Kaut A* [illegible] n 28 *b* from *vap* sow', with *raksanāt* and apparently from *va* (= *van*) 'conquer' with *śauryāt* in 28 *d* probably from *vi* attack' (or in the sense *asana* of the *Dhatupatha*) in 29 *b* from *va* and in 29 *d* from *vap* scatter' (cf Charpentier ZDMG 73 pp 138–140)

30 G s defence of *apaprathat* is conclusive

33–34 *Adidapat* in 33 *b* from *dā*, 'give, in 33 *d* from *da* 'cut off in 34 *a* from *dā* 'purify, and in 34 *c* from *di* destroy (see verse 18 above) Translate 34 *c d* 'And he protected his subjects by a strict determination of the various dharmas' cf *Kaut A* I 3 15 16 and III 1 50 and *Manu* VIII 41

35 36 *Amimapat* in 35 *b* from *ma* 'measure in 35 *d* from *mi* in 36 *b* from *ma* reap', and in 36 *d* from *mi* the enemies being both internal and external (H )

37 If *avivasat* is right it is in *b* from *vasaya* impregnate with impress on a favourite word with Aśvaghosa and Buddhist writers generally, cf *Kaus ral asya* (longer recension) 26

25 *Ūrdhvam*, 'in later times', but as Aurva is the Bhārgava seer referred to, perhaps *c* should run *munir Aurvaḥ kumarasya*

32 Cf *Ram* I. 5, 14 for *aṣṭapada*, and *Divy* p 597, l 23, for *surabhikrta*. *Nimitta*, 'boundary line', as in *Mahavamsa* (ed Geiger) XV 192–3, quoted by H

35 For the epic tag in *a* cf Hopkins, *Great Epic of India* New York 1901, p 426 *Pace* G, I see no difficulty in *b* and would compare *hastastha°* in V 13 below and *B* VII 3, perhaps, however, *hastadhiṣṭhita°* or *hastādhiṣṭhita°* (C) *Vāsas* in *d* might mean the feathers on the arrows, cf *dirghavāsasaḥ*, *MBh* IV 1361 For the emendation and for taking *vāsas* as meaning 'clothes', cf *Jat* p 40, l 13, *vyayatābaddhaparikaramś ca devakumarān* and *ib*, p 210, l 15

37 G objects to *vrddhān* but it means, not 'old', but 'when grown up', the reference being to the well known fact that tiger cubs make excellent pets but become dangerous as they grow up Cf also VIII. 61

38. A regular epic simile, usually of snakes but sometimes of elephants (e g, *Rām* II 101, 30) *Śunyacetasaḥ*, 'with empty minds', i e 'grieving', not 'void of reason' as G takes it, cf *śūnyahrdaya* in *Ram* IV 29 6, *Divy* p 452, l 2, *Jāt* p 83, l 6 and many passages elsewhere

40 The enemies in *d* are kings, thieves, fire, water &c, cf, e g, *Jāt* p 122, l 6–8 and *Sutrālamkara* (tr by Ed Huber, Paris 1908) p 60

43 The phrase in *b* is a regular epic tag, cf *Rām* I 5, 8, and VII 108, 13

44–45 *Ajījapan* in 44 *d* from *jap* and in 45 *d* from *ji* (H)

47 A relative or conjunction is required, and neither *tān* nor *svān* in *d* seems to me happy Query *sacivāmś ca* or *sacivams tu*?

50 *Nājñaya* in *c* is defended by G who translates, 'Not directed by any one to do so but prompted by his (? their) superior intelligence' B C Law translates similarly

52 Translate *c*, 'Where wealth for beggars is not hidden, i e 'is not withheld from them', and cf *Kavirahasya* (ed Heller, longer recension) 7, *vittam na gopayati yas tu vanīpakebhyo* B C Law takes *d* to mean, 'Where no one was proud because of his learning or courage, which may be right in view of *Siks* p 33, l 6, p 98, l 22 and p 148, l 2, all passages recommending the concealing of one's own good qualities *Nigūdha* can hardly mean 'containing' here, as this use is not recorded, and it can hardly refer to the concealment of one's plans, which a king should do. It is tempting to amend to *nigūdhajnātya gauravam*, 'where disrespect for relatives was unknown', comparing *B* II 11, *nāgauravo bandhuṣu nāpy adhīta*.

53. Each *pāda* has a double meaning In *a* perhaps 'a dictionary of meanings' (i e precisely, a thesaurus). *Ādhānam* is a technical term for maintenance of the sacred fires.

54 *Balaśalinām* 'men of might' and 'elephants'.

60 L's original reading *nāthavarttair* can hardly be right and my conjecture

is based on the habit of Nepali copyists of writing *irrti* for *irti*, *r* being easily dropped The probably later reading *nathaiat tair* requires G 's *dipyamānam* in *c* to balance it.

CANTO II 2 L's *sasajje* possibly preserves a grammatical peculiarity of Aśvaghoṣa s

10 For *d* cf *Sakuntala* (ed Pischel) V 7

13 The remains in L of the fourth syllable of *c* are of a letter not occurring elsewhere, possibly *ñchi*

16 *Acaisit*, 'acquired' and 'covered', is evidently right

17 *Apyasit* is intransitive, for the man who is compassionate by nature re joices exceedingly when he sees persons in distress on whom to exercise his compassion

18 The text is certain except in *d* but the translation difficult To take *adidā s t* and *aditsit* as both from *dā*, 'give', leaves the verse with only the antithesis between attachment to friendship and kindliness for its point *Aditsit* is clearly from *dā*, 'give' The only other recorded form of *didāsa* is from *dī* 'destroy' (*Dhatupātha* IV 26), which the *PW* gives from Vopadeva If so, the locative must be governed by *sauharda* *Maitra* is the ally by reason of long established friend ship (*Kām Nitisara* (TSS no XIV) IX 21, 22 and XVI 28) Translate there fore, 'Out of his firm attachment to amity with his allies by long-established friendship, however worthless they might be, he did not care to harm them but liked in his kindliness to give them his property according to their needs' The sentiment is the exact opposite of that expressed in *Kam Nitisara* VIII 74

20 G 's conjecture in *a* seems to me certain Translate, 'He ever scattered the *bali* offering according to rule', it has nothing to do with taxes. For *apraptam* cf J J Meyer s translation of *Kaut A* p 444, n 5

23 The reading in *a* should perhaps be *nākrkṣat* (from *krś*)

28-29 *Ratnsattrān* are no doubt the same as the *sattrājiino rātricāriṇaḥ* of *Kauṭ A* XIV 1, 4 (cf also *ib* VIII 4 61) *Aiīvapat* in 28 *b* from *vap*, 'sow', with *rakṣanāt* and apparently from *va* (= *van*) 'conquer', with *śauryāt* in 28 *d* probably from *vī*, 'attack' (or in the sense *asana* of the *Dhātupāṭha*) in 29 *b* from *vā*, and in 29 *d* from *vap*, 'scatter' (cf Charpentier, ZDMG 73, pp 138-140)

30 G 's defence of *apaprathat* is conclusive.

33-34 *Adidapat* in 33 *b* from *dā*, 'give', in 33 *d* from *dī*, 'cut off', in 34 *a* from *dī*, 'purify', and in 34 *c* from *dī*, 'destroy' (see verse 18 above). Translate 34 *c d*, 'And he protected his subjects by a strict determination of the various dharmas', cf *Kauṭ A* I 3 15-16 and III, 1, 50 and *Manu* VIII 41

35 36. *Amīmapat* in 35 *b* from *mī*, 'measure' in 35 *d* from *mi* in 36 *b* from *mā* 'reap', and in 36 *d* from *mī*, the enemies being both internal and external (II )

37 If *arirasat* is right, it is in *b* from *rasaya*, 'impregnate with', 'impress on', a favourite word with Aśvaghoṣa and Buddhist writers generally, cf *Kari ṇikaya* (longer recension) 26

38 *Vyakta* 'wise', 'capable', cf *SP* II 50, III 187 &c and *Mhv* I, p 205, l 7

39 *Abibhasat* in *b*, taken with *tejasā*, from *bhas*, 'burn to ashes' i e 'exterminate' (cf IX 20 below and *Bhattikavya* XIV 85 *bhasmasac cakararin*), and taken with *tvisa*, from *bhas* in the sense of *bhartsana* (*Dhatupatha* III 18).

43 *Nikriyah*, 'deceitfulness', 'baseness', *vikriyah* or *vikriyam* makes better sense (cf III 19) In either case the accusative is required with *agami*

45 Translate *c*, 'Whose vassals were invincible (to their foes) and submissive (to him)', and cf *Kaut A* VI 1, 3 and 8, *śakyasāmanta* (wrongly explained in the commentary on *Kam Nitisara* IV 7), equivalent to *anatasamanta* in *Manu* VII 69

46 Query *dharmacaryam* in *d*?

56 In *b* °*ketudharah* is perhaps better For a more elaborate play on the meanings of *ketu* v *Theragatha* I 64

61 L shows for *b* 6 a consonant with a loop (probably *k*, *v*, or *s*) and *a*, for *b* 7 *ya* probably and for *b* 8 *t*, the vowel having disappeared For *bhavaya* cf *B* I 83 (88) *paramabhavaya sutasya* as given in JRAS 1927, p 215

64 From the first line I conclude that the metre as in 65 must be *upasthitapracupita*, variety *vardhamāna*, but the tradition is corrupt even in L which the unidentifiable remains show to have had the same number of letters in *c* as P, it probably also had *hr* in *b* 12 The restoration of the text is based on the supposition that the last two syllables of *b* have dropped out and that *hrdaya* belongs to *c*, against it is the fact that the letter corresponding to P s *śra* in *c* seems to have a subscript *u* in L The missing syllables are perhaps alternatively to be supplied from the superfluous ones in *d*

Canto III 2 Speyer's *tapasitan* is explained by him as formed like *duhkhita* or as a past participle from *tapasyati*

3 The spelling *Udraka* is curious in place of the regular *Udraka* (as in XI 56 note)

5 *Dhyānaniśayam* is clearly right In *d* I should have preferred *'marānnam* on palaeographical grounds and as referring to *amrta* immediately following, but *varānnam* is more in accord with parallel passages

10 The two streams are still known as the Barna and the Asi.

13 For *triparivarta* and *dvādaśavikalpa* see *Lal V* ch XXVI, p. 417, l 15 ff, and *Mhv* III, p 333 l 11 and note The epithets hint at a comparison of the Wheel of the Law with the wheel of the year with its three seasons and twelve months, just as in earlier literature the year is the wheel of *Rta* with twelve spokes. The tail of the *r* below *m* in *c* is just visible in L. P continually confuses *p* and *s*

16 Query *vyaghāna* in *d*?

18 The fact that relatives &c are a real danger to holiness is explained in XV 30 ff

22 *Tasthivan* in *b* makes G s *niścalagatir* in *c* tautologous *Niścalamatir* is right, since naturally it requires a steadier head to lie down in the air as if on the ground than to walk or stand in it.

29 H.'s *dadhyire* would not be suitable for householders

30 In *d* query *muner upasakah*?

37 In L the top halves of *gu na*, and *pi* in *c* are cut away by a hole and it is uncertain what vowel was added to *na* P s reading seems undoubtedly right

40 The visamas i e *raga*, *dvesa*, and *moha* *Vibhava* here = the contrary of *bhava*, 'prosperity'

CANTO IV 3 *Mānena* in *c* must be corrupt, query *bhāsena* or *bhavena*? For *dipti* cf *BhNS* XXII 26

4 *Sivakula* in *c*, because Nanda belonged to the solar dynasty (G)

7 Cf *Raghuvamśa* VII 14 which equals *Kumarasambhava* VII 66

8 G points out that by analogy with verses 7, 9, 10 and 11 *tad* is required in this verse, possibly *madāndhabhutam* is corrupt and should be two words, *tad* and *bhutam*

11 The restoration of *c* is a desperate affair and the text adopted a mere stopgap It ought to be a single compound corresponding to *a* and ending with *balāharena* or *vinodanena*

14 *Sya* for *ksā* is not uncommon in MSS of this class. *Cikitsayitā* 'intentionally' (H)

15 *Nāma*, 'nominally', 'as if', 'in pretence', still current in the Hindi idiom *nām ke wāste*

17 The reading in *a* seems certain, *yoktraya* is a denominative from *yoktra* found several times in the *MBh* (cf *PW* s. v) in the phrase *bāhubhyām yoktraya* For the comparative expressing a high degree cf, e g. *B* III 10, *Jat* I 14 and *Manu* VI 12

18 For *vedi* see Geiger and Bode s translation of the *Mahāvamsa*, p 296

21 *Cikura* here = *capala* as in the *Amarakośa*

25 *Nispranaya* 'not making any request' Cf Pali and *pranaya*, 'a forced levy', in *Kauṭ* A V. 2, 19

26 L's reading points to the unrecorded *anuvilepana* Perhaps *ayojayan* in *c*

37 *Asavarna*, 'not having the same sound' i e 'uneven', 'unsteady', the best reading palaeographically

38 *Tata stano*° equally correct in *a* according to H Query *tatkārya*° in *d*?

39 Cf definition of *śunyā drsti* in *BhNS* VIII 63

40 *Chātodara*, though not accepted by Senart, appears in the MSS of the *Mhv* at I, p. 147, l 2 and II, p. 7, l 13 and p. 44 l 3 as a stock epithet of Maya.

42 Cf *Kumarasambhava* V 85

43. The sense is certain but not the exact wording of *a* Nanda goes out of sight of Sundari and no longer retained by the sight of her descends rapidly

till he hears a sound of anklets which makes him pause Nanda is the subject of *aratatara* not Sundarī who remains on the palace roof (v VI 1-2) For *adarśanaṃ gam* or *ya* 'go out of the sight of', cf, e g *Rām* II 52, 31 and VI 53, 59 and *Mhv* I, p 293, l 23

44 G has a long and interesting note on this verse, quoting many parallels, but his emendation is unacceptable Nanda does not return but merely keeps on turning round, just as a boat going against the stream is continually turned round by it and is only kept straight by continual effort

46 It does not seem possible to have two such similar epithets as *muktamana* and *gatabhimana* in one line, *abhimana* is used in a good sense again in V 10 and VI 36

CANTO V 5 Query *nirmumukṣum* ? The text is clumsy and perhaps corrupt with desideratives in *a* and *c* and a plain participle in *b*

8 The meaning of *d* is that he was angry with his servants for their neglect, the P T S Pāli dictionary gives *abbhusuyaka* in the sense of 'zealous', which is not supported by the only reference given and is not the meaning here

10 Translate *c d*, 'The Sugata made a sign to show that he had no need of food'

13 C s *parānmukham* in *a* may be correct

15 *Mrdu*, 'weak', 'feeble' The text adopted is close to P palaeographically, closer would be *kleśānukulan viṣayāṃś tataś ca*, but then *tam* and *Nandam* would have to go together after *ākarṣa*, which is improbable

20 For *b* cf *B* IV 52, *vasantenaīrito madaḥ* (JRAS 1927, 219), for *abhi hīra* v *Amarakośa*

22 Query *avasthasu hi*? Cf *B* IX 37 which according to the Tibetan reads *pravṛttaḥ sarvāsv avasthāsu vadhāya mṛtyuḥ*

23 *Sādhāraṇa* the opposite of *āhāryam anyaiḥ* in 26 V note on I 40

24 In *d vidyā* 'intellectual knowledge', is opposed to *prajñā*, 'intuitive wisdom', cf XVIII 35 and 36.

30 The emendation of *b* is unsatisfactory, though *kṣānti* is better palaeographically than *śānti* Query *niṣkrānti*(or *naiṣkramya*)*vighnāś ca hi* or °*vighnā iha*?

37 The text of *d* is problematical 'do you feel satisfied in your mind or not?', taking *samvinna* as equal to *samvid* as used in XIII 39 (v note) *Te* is necessary as the subject of *dṛṣṭā*, making C s division *samvin na citte* impossible, *samvin na* anyhow is not satisfactory, as the phrase *asti na vāsti* suggests a rhetorical question with the same subject for each verb P s variant is probably merely a copyist's conjecture

39 No need to amend Nanda's state of passion is so far advanced that he sees no more advantage in leaving his home than a dying man would a plague infested country, or, taking the desiderative in the sense of a simple

future, which it often has, Nanda is like a man in a plague stricken country, who is sure to die if he does not leave it, but this requires *api* after *mumursor* The MSS seem to have *niśamya* regularly for 'seeing', 'perceiving' and *niśamya* for 'hearing', which is in accordance with the example given in the *Kavirahasya* (longer recension), 198

41 *Pramattah*, 'heedless', is exactly what the sense requires, no need to amend

49 *Ksanasamnipata* = *ksanasampad*, the good fortune of being born when there is a Buddha on earth Query *tad yavad evam* or *esa* in *a*?

52 *Pravasaya* is regularly used metaphorically to mean 'get rid of' in the *Kauṭ A* (v Meyer's translation p 46, n 3), cf also *B* VI 57

CANTO VI 6 *Āp* (or more commonly *labh*), like *pāna* in Hindi, is used with the infinitive in the sense 'get to', 'be able to', 'be allowed to' Therefore *draṣṭum anipsamanā*, 'not wishing to get to see her', i e 'unable to bear the sight of her'

9 *Āśu* (= Pali *assu*?) is often used in epic and Buddhist Sanskrit merely to strengthen the force of the verb, like 'right' and 'straight' in English, cf., e g *Manu* IV 171 where the following verses show *āśu* cannot have its proper sense of 'quickly'

12 No need to amend, she did not realize the truth that, though her husband's love for her was well tried and he was still devoted to her, he had turned to religion.

16 Query *so 'dya śāntim* in *c*?

17 It would have been better to keep C's *so 'pa lesah* in *b* despite the preceding *yām* and though *upadeśa* can mean 'pretext' as well as *apadeśa*

18 *Ādarśana* is given by Apte without reference in the sense of 'mirror'

21 The text of *d* is uncertain but *anyathā yā* is better than *anyathā paś* for 'misjudge'

27 °*nihite* because it is on waving her arms that she notices the ornaments on them.

31 Query *rukmāṅkapāde*?

32 *Tamas*, 'grief'

34 For *dadhyau* cf *Avadānaśataka* II p 209 and *Jām.* I 1, 76

38. Query *vaco 'bhyuvāca*?

43 *Vihāre* vocative

49 I cannot trace any story of Rambhā and Dramila. The wife of Nala kūvara is called Rambhā in *MBh* III 16152 and Nalakūvara's fall from Kailāsa under a curse from Narada is recorded in *Bhāg Pur* X 10 so that perhaps *c* should read *Drumapatimukhi*.

CANTO VII 1 The emendation in *a* is taken from a correction made by Speyer in the copy of his article which he gave to Professor Macdonell

